# MATRICULATION

# SANSKRIT SELECTIONS

## PART II—POETRY




*Revised Edition*

PUBLISHED BY THE
UNIVERSITY OF CALCUTTA
1937

# सूचीपत्रम्

## सूचीपत्रम्

पृष्ठम्

# प्रवेशिका

## रामायणम्



### अन्धमुनि-पुत्रवधः

प्रतिबुद्धो मुहूर्त्तेन शोकोपहतचेतनः ।
अथ राजा दशरथः स चिन्तामभ्यपद्यत ॥१॥
रामलक्ष्मणयोश्चैव विवासाद्वासवोपमम् ।
आविवेशोपसर्गस्तं तमः सूर्यमिवासुरम् ॥२॥
सभार्ये हि गते रामे कौसल्यां कोसलेश्वरः ।
विवक्षुरसितापाङ्गीं स्मृत्वा दुष्कृतमात्मनः ॥
स राजा रजनीं षष्ठीं रामे प्रव्राजिते वनम् ।
अर्धरात्रे दशरथः सोऽस्मरद् दुष्कृतं कृतम् ॥३-४॥

स राजा पुत्रशोकार्त्तः स्मृत्वा दुष्कृतमात्मनः ।
कौसल्यां पुत्रशोकार्तामिदं वचनमब्रवीत् ॥५॥
"यदाचरति कल्याणि शुभं वा यदि वाऽशुभम् ।
तदेव लभते भद्रे कर्ता कर्मजमात्मनः ॥६॥

गुरुलाघवमर्थानामारम्भे कर्मणां फलम् ।
दोषं वा यो न जानाति स बाल इति होच्यते ॥७॥
कश्चिदाम्रवणं छित्त्वा पलाशांश्च निषिञ्चति ।
पुष्पं दृष्ट्वा फले गृध्नुः स शोचति फलागमे ॥८॥
अविज्ञाय फलं यो हि कर्म त्वेवानुधावति ।
स शोचेत् फलवेलायां यथा किंशुकसेचकः ॥९॥
सोऽहमाम्रवणं छित्त्वा पलाशांश्च न्यषेचयम् ।
रामं फलागमे त्यक्त्वा पश्चाच्छोचामि दुर्मतिः ॥१०॥
लब्धशब्देन कौसल्ये कुमारेण धनुष्मता ।
कुमारः शब्दवेधीति मया पापमिदं कृतम् ॥११॥
तदिदं मेऽनुसम्प्राप्तं देवि दुःखं स्वयंकृतम् ।
सम्मोहादिह बालेन यथा स्याद्भक्षितं विषम् ॥१२॥
यथान्यः पुरुषः कश्चित् पलाशैर्मोहितो भवेत् ।
एवं मयाप्यविज्ञातं शब्दवेध्यमिदं फलम् ॥१३॥
देव्यनूढा त्वमभवो युवराजो भवाम्यहम् ।
ततः प्रावृडनुप्राप्ता ममौत्सुक्यविवर्धिनी ॥
अपास्य हि रसान् भौमांस्तप्त्वा च जगदंशुभिः ।
परेताचरितां भीमां रविराचरते दिशम् ॥१४-१५॥
उष्णमन्तर्दधे सद्यः स्निग्धा ददृशिरे घनाः ।
ततो जहृषिरे सर्वे भेकसारङ्गबर्हिणः ॥१६॥
क्लिन्नपक्षोत्तराः स्नाताः कृच्छ्रादिव पतत्रिणः ।
वृष्टिवातावधूताग्रान् पादपानभिपेदिरे ॥१७॥

पतितेनाम्भसाच्छन्नः पतमानेन चासकृत् ।
आबभौ मत्तसारङ्गस्तोयराशिरिवाचलः ॥१८॥
पाण्डुरारुणवर्णानि स्रोतांसि विमलान्यपि ।
सुस्रुवुर्गिरिधातुभ्यः सभस्मानि भुजङ्गवत् ॥१८॥
तस्मिन्नतिसुखे काले धनुष्मानिषुमान् रथी ।
व्यायामकृतसङ्कल्पः सरयूमन्वगां नदीम् ॥२०॥
निपाने महिषं रात्रौ गजं वाभ्यागतं मृगम् ।
अन्यद्वा श्वापदं किञ्चिज्जिघांसुरजितेन्द्रियः ॥२१॥

अथान्धकारे त्वश्रौषं जले कुम्भस्य पूर्यतः ।
अचक्षुर्विषये घोषं वारणस्येव नर्दतः ॥२२॥
ततोऽहं शरमुद्धृत्य दीप्तमाशीविषोपमम् ।
शब्दं प्रति गजप्रेप्सुरभिलक्ष्यमपातयम् ॥२३॥
अमुञ्चं निशितं बाणमहमाशीविषोपमम् ।
तत्र वागुषसि व्यक्ता प्रादुरासीद्वनौकसः ॥२४॥
'हा है'ति पततस्तोये बाणव्यथितमर्मणः ।
तस्मिन्निपतिते भूमौ वागभूत्तत्र मानुषी ॥२५॥

'कथमस्मद्विधे शस्त्रं निपतेच्च तपस्विनि ?
प्रविविक्तां नदीं रात्रावुदाहारोऽहमागतः ॥२६॥
इषुणाभिहतः केन कस्य वापकृतं मया ?
ऋषेर्हि न्यस्तदण्डस्य वने वन्येन जीवतः ।
कथं नु शस्त्रेण वधो मद्विधस्य विधीयते ? ॥२७॥

जटाभारधरस्यैव वल्कलाजिनवाससः ।
को वधेन ममार्थी स्यात् किं वास्यापकृतं मया ? ॥२८॥
एवं निष्फलमारब्धं केवलानर्थसंहितम् ।
न क्वचित् साधु मन्येत यथैव गुरुपातकम् ॥२९॥
नेमं तथानुशोचामि जीवितक्षयमात्मनः ।
मातरं पितरञ्चोभावनुशोचामि मद्वधे ॥३०॥
तदेतन्मिथुनं वृद्धं चिरकालभृतं मया ।
मयि पञ्चत्वमापन्ने कां वृत्तिं वर्तयिष्यति ? ॥३१॥
वृद्धौ च मातापितरावहञ्चैकेषुणा हतः ।
केन स्म निहताः सर्वे सुबालेनाकृतात्मना ?' ॥३२॥

तां गिरं करुणां श्रुत्वा मम धर्मानुकाङ्क्षिणः ।
कराभ्यां सशरं चापं व्यथितस्यापतद्भुवि ॥३३॥
तस्याहं करुणं श्रुत्वा ऋषेर्विलपतो निशि ।
सम्भ्रान्तः शोकवेगेन भृशमासं विचेतनः ॥३४॥
तं देशमहमागम्य दीनसत्त्वः सुदुर्मनाः ।
अपश्यमिषुणा तीरे सरय्वास्तापसं हतम् ॥
अवकीर्णजटाभारं प्रविद्धकलशोदकम् ।
पांशुशोणितदिग्धाङ्गं शयानं शल्यवेधितम् ॥३५-३६॥
स मामुद्वीक्ष्य नेत्राभ्यां त्रस्तमस्वस्थचेतनम् ।
समुवाच वचः क्रूरं दिधक्षन्निव तेजसा ॥३७॥

'किं तवापकृतं राजन् वने निवसता मया ।
जिहीर्षुरम्भो गुर्वर्थं यदहं ताडितस्त्वया ? ॥३८॥

एकेन खलु बाणेन मर्मण्यभिहते मयि।
द्वावन्धौ निहतौ वृद्धौ माता जनयिता च मे ॥३९॥
तौ नूनं दुर्बलावन्धौ मत्प्रतीक्षौ पिपासितौ।
चिरमाशां कृतां कष्टां तृष्णां सन्धारयिष्यतः ॥४०॥
न नूनं तपसो वास्ति फलयोगः श्रुतस्य वा।
पिता यन्मां न जानीते शयानं पतितं भुवि ॥४१॥
जानन्नपि च किं कुर्यादशक्तश्चापरिक्रमः।
भिद्यमानमिवाशक्तस्त्रातुमन्यो नगो नगम् ॥४२॥
पितुस्त्वमेव मे गत्वा शीघ्रमाचक्ष्व राघव!
न त्वामनुदहेत् क्रुद्धो वनमग्निरिवैधितः ॥४३॥
इयमेकपदी राजन् यतो मे पितुराश्रमः।
तं प्रसादय गत्वा त्वं न त्वां सङ्कुपितः शपेत् ॥४४॥
विशल्यं कुरु मां राजन् मर्म मे निशितः शरः।
रुणद्धि मृदु सोत्सेधं तीरमम्बुरयो यथा' ॥४५॥
सशल्यः क्लिश्यते प्राणैर्विशल्यो विनशिष्यति।
इति मामविशच्चिन्ता तस्य शल्यापकर्षणे ॥४६॥
दुःखितस्य च दीनस्य मम शोकातुरस्य च।
लक्षयामास स ऋषिश्चिन्तां मुनिसुतस्तदा ॥४७॥
ताम्यमानं स मां कृच्छ्रादुवाच परमार्थवित्।
सीदमानो विवृत्ताङ्गोऽचेष्टमानो गतः क्षयम् ॥४८॥
'संस्तभ्य शोकं धैर्येण स्थिरचित्तो भवाम्यहम्।
ब्रह्महत्याकृतं तापं हृदयादपनीयताम् ॥४९॥

न द्विजातिरहं राजन् मा भूत् ते मनसो व्यथा ।
शूद्रायामस्मि वैश्येन जातो नरवराधिप' ॥५०॥
इतीव वदतः शब्दाद्वाणाभिहतमर्मणः ।
विघूर्णतो विचेष्टस्य वेपमानस्य भूतले ॥
तस्य त्वाताम्यमानस्य तं बाणमहमुद्धरम् ।
स मामुदीक्ष्य सन्त्रस्तो जहौ प्राणांस्तपोधनः ॥५१-५२॥

जलार्द्रगात्रस्तु विलप्य कृच्छ्रं
मर्मव्रणं सन्ततमुच्छ्वसन्तम् ।
ततः सरय्वां तमहं शयानं
समीक्ष्य भद्रे सुभृशं विषण्णः" ॥५३॥

---

## वनाद् रामादीन् प्रत्यानेतुमागतेन भरतेन सह रामस्य संवादः।

ततः पुरुषसिंहानां वृतानां तैः सुहृद्गणैः।
शोचतामेव रजनी दुःखेन व्यत्यवर्तत ॥१॥
रजन्यां सुप्रभातायां भ्रातरस्ते सुहृद्वृताः।
मन्दाकिन्यां हुतं जप्यं कृत्वा राममुपागमन् ॥२॥
तूष्णीं ते समुपासीना न कश्चित्किंचिदब्रवीत्।
भरतस्तु सुहृन्मध्ये रामं वचनमब्रवीत् ॥३॥
"सान्त्विता मामिका माता दत्तं राज्यमिदं मम।
तद्ददामि तवैवाहं भुङ्क्ष्व राज्यमकण्टकम् ॥४॥
महतेवाम्बुवेगेन भिन्नः सेतुर्जलागमे।
दुरावारं त्वदन्येन राज्यखण्डमिदं महत् ॥५॥
गतिं खर इवाश्वस्य तार्क्ष्यस्येव पतत्रिणः।
अनुगन्तुं न शक्तिर्मे गतिं तव महीपते! ॥६॥
सुजीवं नित्यशस्तस्य यः परैरुपजीव्यते।
राम! तेन तु दुर्जीवं यः परानुपजीवति ॥७॥
यथा तु रोपितो वृक्षः पुरुषेण विवर्धितः।
ह्रस्वकेन दुरारोहो रूढस्कन्धो महाद्रुमः॥

स यथा पुष्पितो भूत्वा फलानि न विदर्शयेत् ।
स तां नानुभवेत्प्रीतिं यस्य हेतोः प्ररोपितः ॥
एषोपमा महाबाहो तमर्थं वेत्तुमर्हसि ।
यदि त्वमस्मान्वृषभो भर्ता भृत्यान् न शाधि हि ॥८-१०॥
श्रेणयस्त्वां महाराज पश्यन्त्वग्र्याश्च सर्वशः ।
प्रतपन्तमिवादित्यं राज्ये स्थितमरिंदमम् ॥११॥
तवानुयाने काकुत्स्थ मत्ता नर्दन्तु कुञ्जराः ।
अन्तःपुरगता नार्यो नन्दन्तु सुसमाहिताः" ॥१२॥
तस्य साध्वित्यमन्यन्त नागरा विविधा जनाः ।
भरतस्य वचः श्रुत्वा रामं प्रत्यनुयाचतः ॥१३॥
तमेवं दुःखितं प्रेक्ष्य विलपन्तं यशस्विनम् ।
रामः कृतात्मा भरतं समाश्वासयदात्मवान् ॥१४॥
"नात्मनः कामकारोऽस्ति पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥१५॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥१६॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥१७॥
यथागारं दृढस्थूणं जीर्णं भूत्वावसीदति ।
तथैव सीदन्ति नरा जरामृत्युवशंगताः ॥१८॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकाकुलम् ॥१९॥

अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥२०॥

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ?
आयुस्ते हीयते यस्य स्थितस्य च गतस्य च ॥२१॥

सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥२२॥

गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ? ॥२३॥

नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमिते रवौ ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥२४॥

हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिहागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥२५॥

यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य च व्यपेयातां कालमासाद्य कंचन ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च धनानि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥२६-२७॥

नात्र कश्चिद्यथाभावं प्राणी समभिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥२८॥

यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥
एवं पूर्वैर्गतो मार्गः पितृपैतामहो ध्रुवः ।
तमापन्नः कथं शोचेद् यस्य नास्ति व्यतिक्रमः ॥२८-३०॥

वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥३१॥
धर्मात्मा स शुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।
धूतपापो गतः स्वर्गं पिता नः पृथिवीपतिः ॥३२॥
भृत्यानां भरणात्सम्यक् प्रजानां परिपालनात् ।
अर्थादानाच्च धर्मेण पिता नस्त्रिदिवं गतः ॥३३॥
कर्मभिस्तु शुभैरिष्टैः क्रतुभिश्चाप्तदक्षिणैः ।
स्वर्गं दशरथः प्राप्तः पिता नः पृथिवीपतिः ॥३४॥
इष्ट्वा बहुविधैर्यज्ञैर्भोगांश्चावाप्य पुष्कलान् ।
उत्तमं चायुरासाद्य स्वर्गतः पृथिवीपतिः ॥३५॥
आयुरुत्तममासाद्य भोगानपि च राघवः ।
स न शोच्यः पिता तातः स्वर्गतः सत्कृतः सताम् ॥३६॥
स जीर्णं मानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥३७॥
तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति ।
तद्विधो यद्विधश्चापि श्रुतवान् बुद्धिमत्तरः ॥३८॥
एते बहुविधाः शोका विलापरुदिते तथा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥३९॥
स स्वस्थो भव मा शोचीर्यात्वा चावस तां पुरीम् ।
तथा पित्रा नियुक्तोऽसि वशिना वदतां वर ॥४०॥
यत्राहमपि तेनैव नियुक्तः पुण्यकर्मणा ।
तत्रैवाहं करिष्यामि पितुरार्यस्य शासनम् ॥४१॥

न मया शासनं तस्य त्यक्तुं न्याय्यमरिंदम !

तत्त्वयापि सदा मान्यं स वै बन्धुः स नः पिता ॥४२॥

तद्वचः पितुरेवाहं संमतं धर्मचारिणः ।

कर्मणा पालयिष्यामि वनवासेन राघव ! ॥४३॥

धार्मिकेणानृशंसेन नरेण गुरुवर्तिना ।

भवितव्यं नरव्याघ्र ! परलोकं जिगीषता ॥४४॥

आत्मानमनुतिष्ठ त्वं स्वभावेन नरर्षभ !

निशाम्य तु शुभं वृत्तं पितुर्दशरथस्य नः" ॥४५॥

इत्येवमुक्त्वा वचनं महात्मा पितुर्निदेश-प्रतिपालनार्थम्

यवीयसं भ्रातरमर्थवच्च प्रभुर्मुहूर्ताद्विरराम रामः ॥४६॥

---

## चन्द्रोदयवर्णनम्[1]

चन्द्रोऽपि साचिव्यमिवास्य[2] कुर्वं-
स्तारागणैर्मध्यगतो विराजन् ।
ज्योत्स्नावितानेन वितत्य लोका-
नुत्तिष्ठतेऽनेकसहस्ररश्मिः ॥१॥

शङ्खप्रभं क्षीरमृणालवर्ण-
मुद्गच्छमानं व्यवभासमानम् ।
ददर्श चन्द्रं स कपिप्रवीरः
पोप्लूयमानं सरसीव हंसम् ॥२॥

ततः स मध्यं गतमंशुमन्तं
ज्योत्स्नावितानं मुहुरुद्वमन्तम् ।
ददर्श धीमान् भुवि भानुमन्तं
गोष्ठे वृषं मत्तमिव भ्रमन्तम् ॥३॥

लोकस्य पापानि विनाशयन्तं
महोदधिं चापि समेधयन्तम् ।
भूतानि सर्वाणि विराजयन्तं
ददर्श शीतांशुमथाभियान्तम् ॥४॥

---

[1] सुन्दरकाण्डे—पञ्चमे सर्गे ।

[2] लङ्कायां सीतान्वेषणार्थं भ्रमतो हनूमतः ।

या भाति लक्ष्मीर्भुवि मन्दरस्था
यथा प्रदोषेषु च सागरस्था ।
तथैव तोयेषु च पुष्करस्था
रराज सा चारुनिशाकरस्था ॥५॥

हंसो यथा राजत-पञ्जरस्थः
सिंहो यथा मन्दर-कन्दरस्थः ।
वीरो यथा गर्वित-कुञ्जरस्थ-
श्चन्द्रोऽपि बभ्राज तथाम्बरस्थः ॥६॥

स्थितः ककुद्मानिव तीक्ष्णशृङ्गो
महाचलः श्वेत इवोर्ध्वशृङ्गः ।
हस्तीव जाम्बूनद-बद्धशृङ्गो
विभाति चन्द्रः परिपूर्णशृङ्गः ॥७॥

विनष्ट-शीताम्बु-तुषारपङ्को
महाग्रहग्राहविनष्टपङ्कः ।
प्रकाशलक्ष्म्याश्रयनिर्मलाङ्को
रराज चन्द्रो भगवान् शशाङ्कः ॥८॥

शिलातलं प्राप्य यथा मृगेन्द्रो
महारणं प्राप्य यथा गजेन्द्रः ।
राज्यं समासाद्य यथा नरेन्द्र-
स्तथा प्रकाशो विरराज चन्द्रः ॥९॥

---

## रावणशक्त्याहतस्य लक्ष्मणस्य पुनरुत्थानम्[1]

शक्त्या निपातितं दृष्ट्वा रावणेन बलीयसा ।
लक्ष्मणं समरे शूरं शोणितौघ-परिप्लुतम् ।
स दत्त्वा तुमुलं युद्धं रावणस्य दुरात्मनः ।
विसृजन्नेव बाणौघान् सुषेणमिदमब्रवीत् ॥१-२॥

"एष रावणवीर्येण लक्ष्मणः पतितो भुवि ।
सर्पवच्चेष्टते वीरो मम शोकमुदीरयन् ॥३॥

शोणितार्द्रमिमं वीरं प्राणैः प्रियतरं मम ।
पश्यतो मम का शक्तिर्योद्धुं पर्याकुलात्मनः ॥४॥

अयं स समरश्लाघी भ्राता मे शुभलक्षणः ।
यदि पञ्चत्वमापन्नः प्राणैर्मे किं सुखेन वा ? ॥५॥

लज्जतीव हि मे वीर्यं भ्रश्यतीव कराद्धनुः ।
सायका व्यवसीदन्ति दृष्टिर्बाष्पवशं गता ॥६॥

अवसीदन्ति गात्राणि स्वप्नयाने नृणामिव ।
चिन्ता मे जायते तीव्रा मुमूर्षा चोपजायते" ॥७॥

भ्रातरं निहतं दृष्ट्वा रावणेन दुरात्मना ।
विनिष्टनन्तं दुःखार्तं मर्मण्यभिहतं भृशम् ।
परं विषादमापन्नो विललापाकुलेन्द्रियः ॥८॥

---

[1] युद्धकाण्डे—१०२-तमो सर्गः ।

"भ्रातरं निहतं दृष्ट्वा लक्ष्मणं रणपांशुषु
विजयोऽपि हि मे शूर ! न प्रियायोपकल्पते ।
अचक्षुर्विषयश्चन्द्रः कां प्रीतिं जनयिष्यति ? ॥९॥

किं मे युद्धेन ? किं प्राणैर्युद्धे कार्यं न विद्यते ।
यत्रायं निहतः शेते रणमूर्धनि लक्ष्मणः ॥१०॥

यथैव मां वनं यान्तमनुयाति महाद्युतिः ।
अहमप्यनुयास्यामि तथैवैनं यमक्षयम् ॥११॥

देशे देशे कलत्राणि देशे देशे च बान्धवाः ।
तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥१२॥

सीतया किन्नु राज्येन लक्ष्मणेन विना मम ?
किन्नु वक्ष्याम्यहं त्वम्बां सुमित्रां पुत्रवत्सलाम् ॥१३॥

उपालम्भं न शक्ष्यामि सोढुं दत्तं सुमित्रया ।
किन्नु वक्ष्यामि कौशल्यां मातरं किन्नु केकयीम् ? ॥१४॥

भरतं किन्नु वक्ष्यामि शत्रुघ्नं च महाबलम् ?
सह तेन वनं यातो विना तेनागतः कथम् ? ॥१५॥

इहैव मरणं श्रेयो न तु बन्धुविगर्हणम् ।
किं मया दुष्कृतं कर्म कृतमन्यत्र जन्मनि ।
येन मे धार्मिको भ्राता निहतश्चाग्रतः स्थितः ? ॥१६॥

हा भ्रातर्मनुजश्रेष्ठ ! शूराणां प्रवर ! प्रभो !
एकाकी किन्न मां त्यक्त्वा परलोकाय गच्छसि ? ॥१७॥

विलपन्तं च मां भ्रातः ! किमर्थं नावभाषसे ?
उत्तिष्ठ, पश्य, किं शेषे ? दीनं मां पश्य चक्षुषा ॥१८॥
शोकार्तस्य प्रमत्तस्य पर्वतेषु वनेषु च ।
विषण्णस्य महाबाहो ! समाश्वासयिता मम" ॥१९॥

रामम् एवं ब्रुवाणं तं शोकव्याकुलितेन्द्रियम् ।
आश्वासयन्नुवाचेदं सुषेणः परमं वचः ॥२०॥
"त्यजेमां नरशार्दूल ! बुद्धिं वैक्लव्यकारिणीम् ।
शोकसञ्जननीं चिन्तां तुल्यां बाणैश्चमूमुखे ॥२१॥
नैव पञ्चत्वमापन्नो लक्ष्मणो लक्ष्मिवर्धनः ।
न ह्यस्य विकृतं वक्त्रं न च श्यामं न निष्प्रभम् ॥२२॥
सुप्रभं च प्रसन्नं च मुखमस्य निरीक्ष्यताम् ।
पद्मपत्रतलौ हस्तौ, सुप्रसन्ने च लोचने ॥२३॥
नेदृशं दृश्यते रूपं गतासूनां विशाम्पते !
विषादं मा कृथा वीर ! सप्राणोऽयमरिन्दमः ॥२४॥
आख्याति तु प्रसुप्तस्य स्रस्तगात्रस्य भूतले ।
सोच्छ्वासं हृदयं वीर ! कम्पमानं मुहुर्मुहुः" ॥२५॥

एवमुक्त्वा महाप्राज्ञः सुषेणो राघवं वचः ।
समीपस्थमुवाचेदं हनुमन्तं महाकपिम् ॥२६॥
"सौम्य ! शीघ्रमितो गत्वा शैलमोषधिपर्वतम् ।
दक्षिणे शिखरे जातां महौषधिमिहानय ॥२७॥

विशल्यकरणीं नाम्ना सावर्ण्यकरणीं तथा ।
सञ्जीवकरणीं वीर ! सन्धानीं च महौषधिम् ।
सञ्जीवनार्थं वीरस्य लक्ष्मणस्य त्वमानय" ॥२८॥

इत्येवमुक्तो हनुमान् गत्वा चौषधिपर्वतम् ।
चिन्तामभ्यगमच्छ्रीमानजानंस्तां महौषधिम् ॥२९॥
तस्य बुद्धिः समुत्पन्ना मारुतेरमितौजसः ।
"इदमेव गमिष्यामि गृहीत्वा शिखरं गिरेः ॥३०॥
अस्मिंस्तु शिखरे जातामोषधिं तां सुखावहाम् ।
प्रतर्केणावगच्छामि सुषेणो ह्येवमब्रवीत् ॥३१॥
अगृह्य यदि गच्छामि विशल्यकरणीमहम् ।
कालात्ययेन दोषः स्याद् वैक्लव्यं च महद् भवेत्" ॥३२॥
इति सञ्चिन्त्य हनुमान् गत्वा क्षिप्रं महाबलः ।
आसाद्य पर्वतश्रेष्ठं त्रिः प्रकम्प्य गिरेस्तटम् ।
फुल्लनानातरुगणं समुत्पाट्य महाबलः ।
गृहीत्वा हरिशार्दूलो हस्ताभ्यां समतोलयत् ॥३३-३४॥
स नीलमिव जीमूतं तोयपूर्णं नभस्तलात् ।
उत्पपात गृहीत्वा तु हनूमाञ् शिखरं गिरेः ॥३५॥

समागम्य महावेगः संन्यस्य शिखरं गिरेः ।
विश्रम्य किञ्चिद्धनुमान् सुषेणमिदमब्रवीत् ॥३६॥
"ओषधीं नावगच्छामि तामहं हरिपुङ्गव ।
तदिदं शिखरं कृत्स्नं गिरेस्तस्याहृतं मया" ॥३७॥

एवं कथयमानं तु प्रशस्य पवनात्मजम् ।
सुषेणो वानरश्रेष्ठो जग्राहोत्पाट्य चौषधिम् ॥३८॥
विस्मितास्तु बभूवुस्ते सर्वे वानरयूथपाः ।
दृष्ट्वा तु हनुमत्कर्म सुरैरपि सुदुष्करम् ॥३९॥

ततः सङ्क्षोदयित्वा तामोषधिं वानरोत्तमः ।
लक्ष्मणस्य ददौ नस्तः सुषेणः सुमहाद्युतिः ॥४०॥
सशल्यः स समाघ्राय लक्ष्मणः परवीरहा ।
विशल्यो विरुजः शीघ्रमुदतिष्ठन्महीतलात् ॥४१॥
तमुत्थितं तु हरयो भूतलात्प्रेक्ष्य लक्ष्मणम् ।
"साधु साध्वि"ति सुप्रीता लक्ष्मणं प्रत्यपूजयन् ॥४२॥
"एह्येही" त्यब्रवीद्रामो लक्ष्मणं परवीरहा ।
सस्वजे गाढमालिङ्ग्य बाष्पपर्याकुलेक्षणः ॥४३॥
अब्रवीच्च परिष्वज्य सौमित्रिं राघवस्तदा ।
"दिष्ट्या त्वां वीर ! पश्यामि मरणात् पुनरागतम् ॥४४॥
न हि मे जीवितेनार्थः सीतया च, जयेन वा ।
को हि मे जीवितेनार्थस्त्वयि पञ्चत्वमागते ?" ॥४५॥

इत्येवं ब्रुवतस्तस्य राघवस्य महात्मनः ।
खिन्नः शिथिलया वाचा लक्ष्मणो वाक्यमब्रवीत् ॥४६॥
"तां प्रतिज्ञां प्रतिज्ञाय पुरा सत्यपराक्रम !
लघुः कश्चिदिवासत्त्वो नैवं त्वं वक्तुमर्हसि ॥४७॥
न हि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः ।
लक्षणं हि महत्त्वस्य प्रतिज्ञा-परिपालनम् ॥४८॥

नैराश्यमुपगन्तुं च नालं ते मत्कृतेऽनघ !
वधेन रावणस्याद्य प्रतिज्ञामनुपालय ॥४८॥
न जीवन् यास्यते भ्रातुस्तव बाणवशं गतः ।
नर्दतस्तीक्ष्णदंष्ट्रस्य सिंहस्येव महागजः ॥५०॥
अहं तु वधमिच्छामि शीघ्रमस्य दुरात्मनः ।
यावदस्तं न यात्येष कृतकर्मा दिवाकरः ॥५१॥

यदि वधमिच्छसि रावणस्य संख्ये
यदि च कृतां हि तवेच्छसि प्रतिज्ञाम् ।
यदि तव राजसुताभिलाष आर्य !
कुरु च वचो मम शीघ्रमद्य वीर !" ॥५२॥

---

## सीताविसर्जनम्

विसृज्य तु सुहृद्वर्गं बुद्ध्या निश्चित्य राघवः ।
समीपे द्वाःस्थमासीनमिदं वचनमब्रवीत् ॥१॥
"शीघ्रमानय सौमित्रिं लक्ष्मणं शुभलक्षणम् ।
भरतञ्च महाभागं शत्रुघ्नमपराजितम्" ॥२॥

रामस्य वचनं श्रुत्वा द्वाःस्थो मूर्ध्नि कृताञ्जलिः ।
लक्ष्मणस्य गृहं गत्वा प्रविवेशानिवारितः ॥३॥
उवाच सुमहात्मानं वर्धयित्वा कृताञ्जलिः ।
"द्रष्टुमिच्छति राजा त्वां, गम्यतां तत्र मा चिरम्" ॥४॥
"बाढ"मित्येव सौमित्रिः श्रुत्वा राघवशासनम् ।
प्राद्रवद्रथमारुह्य राघवस्य निवेशनम् ॥५॥
प्रयान्तं लक्ष्मणं दृष्ट्वा द्वाःस्थो भरतमन्तिकात् ।
उवाच भरतं तत्र वर्धयित्वा कृताञ्जलिः ॥
विनयावनतो भूत्वा, "राजा त्वां द्रष्टुमिच्छति" ॥६॥
भरतस्तु वचः श्रुत्वा द्वाःस्थाद्रामसमीरितम् ।
उत्पपातासनात्तूर्णं पद्भ्यामेव महाबलः ॥७॥
दृष्ट्वा प्रयान्तं भरतं त्वरमाणः कृताञ्जलिः ।
शत्रुघ्नभवनं गत्वा ततो वाक्यमुवाच ह ॥८॥

"एह्यागच्छ रघुश्रेष्ठ, राजा त्वां द्रष्टुमिच्छति ।
गतो हि लक्ष्मणः पूर्वं भरतश्च महायशाः" ॥९॥
श्रुत्वा तु वचनं तस्य शत्रुघ्नः परमासनात् ।
शिरसा वन्द्य चरणौ प्रययौ यत्र राघवः ॥१०॥
द्वाःस्थस्त्वागम्य रामाय सर्वानेव कृताञ्जलिः ।
निवेदयामास तदा भ्रातॄन् स्वान् समुपस्थितान् ॥११॥
कुमारानागताञ् श्रुत्वा चिन्ताव्याकुलितेन्द्रियः ।
अवाङ्मुखो दीनमना द्वाःस्थं वचनमब्रवीत् ॥१२॥
"प्रवेशय कुमारांस्त्वं मत्समीपं त्वरान्वितः ।
एतेषु जीवितं मह्यमेते प्राणप्रिया मम" ॥१३॥
आज्ञप्तास्ते नरेन्द्रेण कुमाराः शुक्लवाससः ।
प्रह्वाः प्राञ्जलयो भूत्वा विविशुस्ते समाहिताः ॥१४॥
ते तु दृष्ट्वा मुखं तस्य सग्रहं शशिनं यथा ।
सन्ध्यागतमिवादित्यं प्रभया परिवर्जितम् ॥
बाष्पपूर्णे च नयने दृष्ट्वा रामस्य धीमतः ।
हतशोभं यथा पद्मं मुखं वीक्ष्य च तस्य ते ॥
ततोऽभिवाद्य त्वरिताः पादौ रामस्य मूर्धभिः ।
तस्थुः समाहिताः सर्वे रामस्त्वश्रूण्यवर्तयत् ॥१५-१७॥
तान् परिष्वज्य बाहुभ्यामुत्थाप्य च महाबलः ।
"आसनेष्वासतेत्युक्त्वा ततो वाक्यं जगाद ह ॥१८॥
"भवन्तो मम सर्वस्वं भवन्तो जीवितं मम ।
भवद्भिश्च कृतं राज्यं पालयामि नरेश्वराः ! ॥१९॥

भवन्तः कृतशास्त्रार्था बुद्ध्या च परिनिष्ठिताः ।
सम्भूय च मदर्थोऽयमन्वेष्टव्यो नरेश्वराः !" ॥२०॥

तथा वदति काकुत्स्थे अवधानपरायणाः ।
उद्विग्नमनसः सर्वे किन्नु राजाभिधास्यति ॥२१॥

तेषां समुपविष्टानां सर्वेषां दीनचेतसाम् ।
उवाच वाक्यं काकुत्स्थो मुखेन परिशुष्यता ॥२२॥

"सर्वे शृणुत, भद्रं वो, मा कुरुध्वं मनोऽन्यथा ।
पौराणां मम सीतायां यादृशी वर्तते कथा ॥२३॥

पौरापवादः सुमहांस्तथा जनपदस्य च ।
वर्तते मयि बीभत्सा सा मे मर्माणि कृन्तति ॥२४॥

अहं किल कुले जात इक्ष्वाकूणां महात्मनाम् ।
सीतापि सत्कुले जाता जनकानां महात्मनाम् ॥२५॥

जानासि त्वं यथा सौम्य दण्डके विजने वने ।
रावणेन हृता सीता स च विध्वंसितो मया ॥२६॥

तत्र मे बुद्धिरुत्पन्ना जनकस्य सुतां प्रति ।
'अत्रोषितामिमां सीतामानयेयं कथं पुरीम् ?' ॥२७॥

प्रत्ययार्थं ततः सीता विवेश ज्वलनं तदा ।
प्रत्यक्षं तव सौमित्रे देवानां हव्यवाहनः ॥
अपापां मैथिलीमाह, वायुश्चाकाशगोचरः ।
चन्द्रादित्यौ च शंसेते सुराणां सन्निधौ पुरा ।
ऋषीणाञ्चैव सर्वेषामपापां जनकात्मजाम् ॥२८-२९॥

एवं शुद्धसमाचारा देवगन्धर्वसन्निधौ ।
लङ्काद्वीपे महेन्द्रेण मम हस्ते निवेदिता ॥३०॥
अन्तरात्मा च मे वेत्ति सीतां शुद्धां यशस्विनीम् ।
ततो गृहीत्वा वैदेहीमयोध्यामहमागतः ॥३१॥
अयन्तु मे महान् वादः शोकश्च हृदि वर्तते ।
पौरापवादः सुमहांस्तथा जनपदस्य च ॥३२॥
अकीर्तिर्यस्य गीयेत लोके भूतस्य कस्यचित् ।
पतत्येवाधमाँल्लोकान् यावच्छब्दः प्रकीर्त्यते ॥३३॥
अकीर्तिर्निन्द्यते देवैः कीर्तिर्लोकेषु पूज्यते ।
कीर्त्यर्थन्तु समारम्भः सर्वेषां सुमहात्मनाम् ॥३४॥
अप्यहं जीवितं जह्यां युष्मान् वा पुरुषर्षभाः ।
अपवादभयाद्भीतः किं पुनर्जनकात्मजाम् ॥३५॥
तस्माद्भवन्तः पश्यन्तु पतितं शोकसागरे ।
न हि पश्याम्यहं भूतं किञ्चिद्दुःखमतोऽधिकम् ॥३६॥
श्वस्त्वं प्रभाते सौमित्रे सुमन्त्राधिष्ठितं रथम् ।
आरुह्य सीतामारोप्य विषयान्ते समुत्सृज ॥३७॥
गङ्गायास्तु परे पारे वाल्मीकेस्तु महात्मनः ।
आश्रमो दिव्यसङ्काशस्तमसातीरमाश्रितः ॥३८॥
तत्रैतां विजने देशे विसृज्य रघुनन्दन ।
शीघ्रमागच्छ सौमित्रे, कुरुष्व वचनं मम ॥३९॥
न चास्मिन् प्रतिवक्तव्यः सीतां प्रति कथञ्चन ॥४०॥

तस्मात्त्वं गच्छ सौमित्रे, नात्र कार्या विचारणा ।
अप्रीतिर्हि परा मह्यं त्वयैतत्प्रतिवारिते ॥४१॥
शापिता हि मया यूयं पादाभ्यां जीवितेन च ।
ये मां वाक्यान्तरे ब्रूयुरनुनेतुं कथञ्चन ।
अहिता नाम ते नित्यं मदभीष्टविघातनात् ॥४२॥
मानयन्तु भवन्तो मां यदि मच्छासने स्थिताः ।
इतोऽद्य नीयतां सीता कुरुष्व वचनं मम ॥४३॥
पूर्वमुक्तोऽहमनया 'गङ्गातीरेऽहमाश्रमान् ।
पश्येयमि'ति तस्याश्च कामः संवर्त्यतामयम्" ॥४४॥

एवमुक्त्वा तु काकुत्स्थो बाष्पेण पिहितेक्षणः ।
संविवेश स धर्मात्मा भ्रातृभिः परिवारितः ।
शोकसंविग्नहृदयो निशश्वास यथा द्विपः ॥४५॥

ततो रजन्यां व्युष्टायां लक्ष्मणो दीनचेतनः ।
सुमन्त्रमब्रवीद्वाक्यं मुखेन परिशुष्यता ॥४६॥
"सारथे, तुरगाञ् शीघ्रान् योजयस्व रथोत्तमे ।
स्वास्तीर्णं राजवचनात् सीतायाश्चासनं शुभम् ॥४७॥
सीता हि राजवचनादाश्रमं पुण्यकर्मणाम् ।
मया नेया महर्षीणां शीघ्रमानीयतां रथः ॥"४८॥

सुमन्त्रस्तु "तथे"त्युक्त्वा युक्तं परमवाजिभिः ।
रथं सुरुचिरप्रख्यं स्वास्तीर्णं सुखशय्यया ॥
आनीयोवाच सौमित्रिं मित्राणां मानवर्धनम् ।
"रथोऽयं समनुप्राप्तो यत् कार्यं क्रियतां प्रभो" ॥४९-५०॥

एवमुक्तः सुमन्त्रेण राजवेश्मनि लक्ष्मणः ।
प्रविश्य सीतामासाद्य व्याजहार नरर्षभः ॥५१॥
"त्वया किलैष नृपतिर्वरं वै याचितः पुरा ।
नृपेण च प्रतिज्ञातमाज्ञप्तश्चाश्रमं प्रति ॥५२॥
गङ्गातीरे ततो देवि, ऋषीणामाश्रमाञ् शुभान् ।
शीघ्रं गत्वा तु वैदेहि शासनात् पार्थिवस्य नः ।
अरण्ये मुनिभिर्जुष्टे अवनेया भविष्यसि" ॥५३॥

एवमुक्ता तु वैदेही लक्ष्मणेन महात्मना ।
प्रहर्षमतुलं लेभे गमनञ्चाप्यरोचयत् ॥५४॥
वासांसि च महार्हाणि रत्नानि विविधानि च ।
गृहीत्वा तानि वैदेही गमनायोपचक्रमे ॥५५॥
"इमानि मुनिपत्नीनां दास्याम्याभरणान्यहम् ।
वस्त्राणि च महार्हाणि धनानि विविधानि च" ॥५६॥

सौमित्रिस्तु "तथे"त्युक्त्वा रथमारोप्य मैथिलीम् ।
प्रययौ शीघ्रतुरगं रामस्याज्ञामनुस्मरन् ॥५७॥
अब्रवीच्च तदा सीता लक्ष्मणं लक्ष्मिवर्धनम् ॥५८॥
"अशुभानि बहून्येव पश्यामि रघुनन्दन !
नयनं मे स्फुरत्यद्य गात्रोत्कम्पश्च जायते ॥५९॥
हृदयञ्चैव सौमित्रे अस्वस्थमिव लक्षये ।
औत्सुक्यं परमञ्चापि अधृतिश्च परा मम ॥६०॥

शून्यामेव च पश्यामि पृथिवीं पृथुलोचन !
अपि स्वस्ति भवेत्तस्य भ्रातुस्ते भ्रातृवत्सल ? ॥६१॥
श्वश्रूणाञ्चैव मे वीर सर्वासामविशेषतः ।
पुरे जनपदे चैव कुशलं प्राणिनामपि ?" ॥६२॥
इत्यञ्जलिकृता सीता देवता अभ्ययाचत ।
लक्ष्मणोऽर्थं ततः श्रुत्वा शिरसा वन्द्य मैथिलीम् ।
"शिव"मित्यब्रवीद्‌हृष्टो हृदयेन विशुष्यता ॥६३॥

ततो वासमुपागम्य गोमतीतीर आश्रमे ।
प्रभाते पुनरुत्थाय सौमित्रिः सूतमब्रवीत् ॥६४॥
"योजयस्व रथं शीघ्रमद्य भागीरथीजलम् ।
शिरसा धारयिष्यामि त्रियम्बक इवौजसा" ॥६५॥
सोऽश्वान् विचारयित्वा तु रथे युक्तान् मनोजवान् ।
"आरोहस्वे"ति वैदेहीं सूतः प्राञ्जलिरब्रवीत् ॥६६॥
सा तु सूतस्य वचनादारुरोह रथोत्तमम् ।
सीता सौमित्रिणा सार्धं सुमन्त्रेण च धीमता ॥६७॥
आससाद विशालाक्षी गङ्गां पापविनाशिनीम् ॥६८॥

अथार्धदिवसं गत्वा भागीरथ्या जलाशयम् ।
निरीक्ष्य लक्ष्मणो दीनः प्ररुरोद महात्मनः ॥६९॥
सीता तु परमायत्ता दृष्ट्वा लक्ष्मणमातुरम् ।
उवाच वाक्यं धर्मज्ञा, "किमिदं रुद्यते त्वया ? ॥७०॥

जाह्नवीतीरमासाद्य चिराभिलषितं मम ।
हर्षकाले किमर्थं मां विषादयसि लक्ष्मण ! ॥७१॥
नित्यं त्वं रामपार्श्वेषु वर्तसे पुरुषर्षभ !
कच्चिद्विनाकृतस्तेन द्विरात्रं शोकमागतः ॥७२॥
ममापि दयितो रामो जीवितादपि लक्ष्मण !
न चाहमेवं शोचामि, मैवं त्वं बालिशो भव ॥७३॥
तारयस्व च मां गङ्गां, दर्शयस्व च तापसान् ।
ततो मुनिभ्यो वासांसि दास्याम्याभरणानि च ॥७४॥
ततः कृत्वा महर्षीणां यथार्हमभिवादनम् ।
तत्र चैकां निशामुष्य यास्यामस्तां पुरीं पुनः ॥७५॥
ममापि पद्मपत्राक्षं सिंहोरस्कं कृशोदरम् ।
त्वरते हि मनो द्रष्टुं रामं रमयतां वरम्" ॥७६॥

तस्यास्तद्वचनं श्रुत्वा प्रमृज्य नयने शुभे ।
नाविकानाह्वयामास लक्ष्मणः परवीरहा ।
"इयञ्च सज्जा नौ"श्चेति दाशाः प्राञ्जलयोऽब्रुवन् ॥७७॥
तितीर्षुर्लक्ष्मणो गङ्गां शुभां नावमुपारुहत् ।
गङ्गां सन्तारयामास लक्ष्मणस्तां समाहितः ॥७८॥

अथ नावं सुविस्तीर्णां नैषादीं राघवानुजः ।
आरुरोह समायुक्तां पूर्वमारोप्य मैथिलीम् ॥७९॥
सुमन्त्रञ्चैव "सरथं स्थीयतामि"ति लक्ष्मणः ।
उवाच शोकसन्तप्तः "प्रयाही"ति च नाविकम् ॥८०॥

ततस्तीरमुपागम्य भागीरथ्याः स लक्ष्मणः ।
उवाच मैथिलीं वाक्यं प्राञ्जलिर्बाष्पसंवृतः ॥८१॥
"हृद्गतं मे महच्छल्यं यस्मादार्येण धीमता ।
अस्मिन्निमित्ते वैदेहि लोकस्य वचनीकृतः ॥८२॥
श्रेयो हि मरणं मेऽद्य मृत्युर्वा यत् परं भवेत् ।
न चास्मिन्नीदृशे कार्ये नियोज्यो लोकनिन्दिते ॥८३॥
प्रसीद च न मे पापं कर्तुमर्हसि शोभने !"
इत्यञ्जलिकृतो भूमौ निपपात स लक्ष्मणः ॥८४॥

रुदन्तं प्राञ्जलिं दृष्ट्वा काङ्क्षन्तं मृत्युमात्मनः ।
मैथिली भृशसंविग्ना लक्ष्मणं वाक्यमब्रवीत् ॥८५॥
"किमिदं नावगच्छामि, ब्रूहि तत्त्वेन लक्ष्मण !
पश्यामि त्वां न च स्वस्थमपि क्षेमं महीपतेः ? ॥८६॥
शापितोऽसि नरेन्द्रेण यत्त्वं सन्तापमागतः ।
तद् ब्रूयाः सन्निधौ मह्यमहमाज्ञापयामि ते" ॥८७॥
वैदेह्या चोद्यमानस्तु लक्ष्मणो दीनचेतनः ।
अवाङ्मुखो बाष्पगलो वाक्यमेतदुवाच ह ॥८८॥
"श्रुत्वा परिषदो मध्ये ह्यपवादं सुदारुणम् ।
पुरे जनपदे चैव त्वत्कृते जनकात्मजे ।
रामः सन्तप्तहृदयो मां निवेद्य गृहं गतः ॥८९॥
न तानि वचनीयानि मया देवि तवाग्रतः ।
यानि राज्ञा हृदि न्यस्तान्यमर्षात् पृष्ठतः कृतः ॥९०॥

सा त्वं त्यक्ता नृपतिना निर्दोषा मम संनिधौ ।
पौरापवादभीतेन ग्राह्यं देवि न तेऽन्यथा ॥८१॥
आश्रमान्तेषु च मया त्यक्तव्या त्वं भविष्यसि ।
राज्ञः शासनमादाय तथैव किल दौहृदम् ॥८२॥
तदेतज्जाह्नवीतीरे ब्रह्मर्षीणां तपोवनम् ।
पुण्यञ्च रमणीयञ्च मा विषादं कृथाः शुभे ! ॥८३॥
राज्ञो दशरथस्यैव पितुर्मे मुनिपुङ्गवः ।
सखा परमको विप्रो वाल्मीकिः सुमहायशाः ॥८४॥
पादच्छायामुपागम्य सुखमस्य महात्मनः ।
उपासनपरैकाग्रा वस त्वं जनकात्मजे ! ॥८५॥
पतिव्रतात्वमास्थाय रामं कृत्वा सदा हृदि ।
श्रेयस्ते परमं देवि तथा कृत्वा भविष्यति" ॥८६॥
लक्ष्मणस्य वचः श्रुत्वा दारुणं जनकात्मजा ।
परं विषादमागम्य वैदेही निपपात ह ॥८७॥
सा मुहूर्तमिवासंज्ञा बाष्पपर्याकुलेक्षणा ।
लक्ष्मणं दीनया वाचा उवाच जनकात्मजा ॥८८॥
"मामिकेयं तनुर्नूनं सृष्टा दुःखाय लक्ष्मण !
धात्रा यस्यास्तथा मेऽद्य दुःखमूर्तिः प्रदृश्यते ॥८९॥
किन्नु पापं कृतं पूर्वं को वा दारैर्वियोजितः ।
याहं शुद्धसमाचारा त्यक्ता नृपतिना सती ॥१००॥
पुराहमाश्रमे वासं रामपादानुवर्तिनी ।
अनुरुध्यापि सौमित्रे दुःखे च परिवर्तिनी ॥१०१॥

सा कथं ह्याश्रमे सौम्य वत्स्यामि विजनीकृता ।
आख्यास्यामि च कस्याहं दुःखं दुःखपरायणा ॥१०२॥
किन्नु वक्ष्यामि मुनिषु कर्म वासत्कृतं प्रभो !
कस्मिन् वा कारणे त्यक्ता राघवेण महात्मना ॥१०३॥
न खल्वद्यैव सौमित्रे जीवितं जाह्नवीजले ।
त्यजेयं राजवंशस्तु भर्तुर्मे परिहास्यते ॥१०४॥
यथाज्ञं कुरु सौमित्रे, त्यज मां दुःखभागिनीम् ।
निदेशे स्थीयतां राज्ञः शृणु चेदं वचो मम ॥१०५॥
श्वश्रूणामविशेषेण प्राञ्जलिप्रग्रहेण च ।
शिरसाभिनतो ब्रूयाः सर्वासामेव लक्ष्मण ! ॥१०६॥
शिरसा वन्द्य चरणौ कुशलं ब्रूहि पार्थिवम् ।
वक्तव्यश्चापि नृपतिर्धर्मेषु सुसमाहितः ॥१०७॥
'जानासि च यथा शुद्धा सीता तत्त्वेन राघव !
भक्त्या च परया युक्ता या हिता तव नित्यशः ॥१०८॥
अहं त्यक्ता च ते वीर अयशोभीरुणा जने ।
यच्च ते वचनीयं स्यादपवादसमुत्थितम् ।
मया हि परिहर्तव्यं त्वं हि मे परमा गतिः' ॥१०९॥
वक्तव्यश्चैव नृपतिर्धर्मेण सुसमाहितः ॥११०॥
'यथा भ्रातृषु वर्तेथास्तथा पौरेषु नित्यदा ।
परमो ह्येष धर्मस्ते तस्मात् कीर्तिरनुत्तमा ॥१११॥
यत्तु पौरजने राजन् धर्मेण समवाप्नुयात् ।
अहन्तु नानुशोचामि स्वशरीरं नरर्षभ ! ॥११२॥

यथापवादं पौराणां तथैव रघुनन्दन !
पतिर्हि देवता नार्याः पतिर्बन्धुः पतिर्गुरुः ॥११३॥
प्राणैरपि प्रियं तस्माद्भर्तुः कार्यं विशेषतः' ।
इति मद्वचनाद्रामो वक्तव्यो मम संग्रहः" ॥११४॥
एवं ब्रुवन्त्यां सीतायां लक्ष्मणो दीनचेतनः ।
शिरसा वन्द्य चरणौ व्याहर्तुं न शशाक ह ॥११५॥
प्रदक्षिणञ्च तां कृत्वा रुदन्नेव महास्वनः ।
ध्यात्वा मुहूर्तं तामाह, "किं मां वक्ष्यसि शोभने ! ॥
दृष्टपूर्वं न ते रूपं पादौ दृष्टौ तवानघे !
कथमत्र हि पश्यामि रामेण रहितां वने" ॥११६-११७॥
इत्युक्त्वा तां नमस्कृत्य पुनर्नावमुपारुहत् ।
आरुरोह पुनर्नावं नाविकञ्चाभ्यचोदयत् ॥११८॥
स गत्वा चोत्तरं तीरं शोकभारसमन्वितः ।
संमूढ इव दुःखेन रथमध्यारुहद् द्रुतम् ॥११९॥
मुहुर्मुहुः परावृत्य दृष्ट्वा सीतामनाथवत् ।
चेष्टन्तीं परतीरस्थां लक्ष्मणः प्रययावथ ॥१२०॥
दूरस्थं रथमालोक्य लक्ष्मणञ्च मुहुर्मुहुः ।
निरीक्ष्यमाणामुद्विग्नां सीतां शोकः समाविशत् ॥१२१॥
सा दुःखभारावनता यशस्विनी
यशोधरा नाथमपश्यती सती ।
रुरोद सा बर्हिणनादिते वने
महास्वनं दुःखपरायणा सती ॥१२२॥

सीतान्तु रुदतीं दृष्ट्वा ते तत्र मुनिदारकाः।
प्राद्रवन् यत्र भगवानास्ते वाल्मीकिरग्र्यधीः ॥१२३॥
अभिवाद्य मुनेः पादौ मुनिपुत्रा महर्षये।
सर्वं निवेदयामासुस्तस्यास्तु रुदितस्वनम् ॥१२४॥
"अदृष्टपूर्वा भगवन् कस्याप्येषा महात्मनः।
पत्नी श्रीरिव सम्मोहाद्विरौति विकृतानना ॥१२५॥
भगवन्, साधु पश्येस्त्वं देवतामिव खाच्युताम्।
नद्यास्तु तीरे भगवन्, वरस्त्री कापि दुःखिता ॥१२६॥
दृष्टास्माभिः प्ररुदिता दृढं शोकपरायणा।
अनर्हा दुःखशोकाभ्यामेका दीना अनाथवत् ॥१२७॥
न ह्येनां मानुषीं विद्मः सत्क्रियास्याः प्रयुज्यताम्।
आश्रमस्याविदूरस्थ त्वामियं शरणं गता।
त्रातारमिच्छते साध्वी भगवंस्त्रातुमर्हसि" ॥१२८॥

तेषान्तु वचनं श्रुत्वा बुद्ध्या निश्चित्य धर्मवित्।
तपसा लब्धचक्षुष्मान् प्राद्रवद् यत्र मैथिली ॥१२९॥
तं प्रयान्तमभिप्रेत्य शिष्या ह्येनं महामतिम्।
तन्तु देशमभिद्रुत्य किञ्चित् पद्भ्यां महामतिः।
अर्घ्यमादाय रुचिरं जाह्नवीतीरमागमत्।
ददर्श राघवस्येष्टां सीतां पत्नीमनाथवत् ॥१३०-१३१॥

तां सीतां शोकभारार्तां वाल्मीकिर्मुनिपुङ्गवः।
उवाच मधुरां वाणीं ह्लादयन्निव तेजसा ॥१३२॥

"स्नुषा दशरथस्य त्वं रामस्य महिषी प्रिया ।
जनकस्य सुता राज्ञः स्वागतं ते पतिव्रते ॥१२३॥
आयान्ती चासि विज्ञाता मया धर्मसमाधिना ।
कारणञ्चैव सर्वं मे हृदयेनोपलक्षितम् ॥१२४॥
तव चैव महाभागे विदितं मम तत्त्वतः ।
सर्वञ्च विदितं मह्यं त्रैलोक्ये यद्धि वर्तते ॥१२५॥
अपापां वेद्मि सीते ते तपोलब्धेन चक्षुषा ।
विस्रब्धा भव वैदेहि साम्प्रतं मयि वर्तसे ॥१२६॥
आश्रमस्याविदूरे मे तापस्यस्तपसि स्थिताः ।
तास्त्वां वत्से यथावत् सम्पालयिष्यन्ति नित्यशः ॥१२७॥
इदमर्घ्यं प्रतीच्छ त्वं विस्रब्धा विगतज्वरा ।
यथा स्वगृहमभ्येत्य विषादञ्चैव मा कृथाः" ॥१२८॥

श्रुत्वा तु भाषितं सीता मुनेः परममद्भुतम् ।
शिरसा वन्द्य चरणौ "तथे"त्याह कृताञ्जलिः ॥१२९॥

तं प्रयान्तं मुनिं सीता प्राञ्जलिः पृष्ठतोऽन्वगात् ।
तं दृष्ट्वा मुनिमायान्तं वैदेह्या मुनिपत्नयः ।
उपाजग्मुर्मुदा युक्ता वचनञ्चेदमब्रुवन् ॥१३०॥
"स्वागतं ते मुनिश्रेष्ठ, चिरस्यागमनञ्च ते ।
अभिवादयामस्त्वां सर्वा, उच्यतां किञ्च कुर्महे" ॥१३१॥

तासां तद्वचनं श्रुत्वा वाल्मीकिरिदमब्रवीत् ।
"सीतेयं समनुप्राप्ता पत्नी रामस्य धीमतः ।

स्नुषा दशरथस्यैषा जनकस्य सुता सती ।
अपापा पतिना त्यक्ता परिपाल्या मया सदा ॥१४२-१४३॥
इमां भवत्यः पश्यन्तु स्नेहेन परमेण हि ।
गौरवान्मम वाक्याच्च पूज्या वोऽस्तु विशेषतः" ॥१४४॥
मुहुर्मुहुश्च वैदेहीं परिदाय महायशाः ।
स्वमाश्रमं शिष्यवृतः पुनरायान्महातपाः ॥१४५॥

## रामाश्वमेधसभायां वाल्मीकेराज्ञया कुशीलवयो रामायणगानम्, सीतायाः पातालप्रवेशश्च[1]

तौ रजन्यां प्रभातायां स्नातौ ।
यथोक्तमृषिणा ... तत्रोपगायताम् ॥१॥
तां स शुश्राव काकुत्स्थः पूर्वाचार्य-विनिर्मिताम् ।
अपूर्वां पाठ्यजातिं च गेयेन समलङ्कृताम् ॥२॥

[1] उत्तरकाण्डे—९४-तमो सर्गः ।

प्रमाणैर्बहुभिर्बद्धां तन्त्रीलयसमन्विताम् ।
बालाभ्यां राघवः श्रुत्वा कौतूहलपरोऽभवत् ॥३॥

अथ कर्मान्तरे राजा समाहूय महामुनिम् ।
पार्थिवांश्च नरव्याघ्रः पण्डितान् नैगमांस्तथा ॥
पौराणिकान् शब्दविदो ये वृद्धाश्च द्विजातयः ।
स्वराणां लक्षणज्ञांश्च प्रोत्सुकान् द्विजसत्तमान् ॥
पादाक्षरसमासज्ञांश्छन्दःसु परिनिष्ठितान् ।
कलामात्राविशेषज्ञान् ज्योतिषे च परं गतान् ॥
क्रियाकल्पविदश्चैव तथा कार्यविशारदान् ।
हेतूपचारकुशलान् हैतुकांश्च बहुश्रुतान् ॥
छन्दोविदः पुराणज्ञान् वैदिकान् द्विजसत्तमान् ।
चित्रज्ञान् वृत्तसूत्रज्ञान् नृत्यगीतविशारदान् ।
एतान् सर्वान् समाहूय गातारौ समवेशयत् ॥४-८॥

तेषां संवदतां तत्र श्रोतॄणां हर्षवर्द्धनम् ।
गेयं प्रचक्रतुस्तत्र तावुभौ मुनिदारकौ ॥९॥
ततः प्रवृत्तं मधुरं गान्धर्वमतिमानुषम् ।
न च तृप्तिं ययुः सर्वे श्रोतारो गेयसम्पदा ॥१०॥
हृष्टा मुनिगणाः सर्वे पार्थिवाश्च महौजसः ।
पिबन्त इव चक्षुर्भिः पश्यन्ति स्म मुहुर्मुहुः ॥११॥
ऊचुः परस्परं चेदं सर्व एव समाहिताः ।
"उभौ रामस्य सदृशौ बिम्बाद् बिम्बमिवोद्धृतौ ॥१२

जटिलौ यदि न स्यातां न वल्कलधरौ यदि ।
विशेषं नाधिगच्छामो गायतो राघवस्य च" ॥१३॥

ततोऽपराह्णसमये राघवः समभाषत ।
"अष्टादश सहस्राणि सुवर्णस्य महात्मनोः ।
प्रयच्छ शीघ्रं काकुत्स्थ ! यदन्यदभिकाङ्क्षितम्" ।
ददौ स शीघ्रं काकुत्स्थो बालयोर्वै पृथक् पृथक् ॥१४-१५॥
दीयमानं सुवर्णं तु नागृह्णीतां कुशीलवौ ।
ऊचतुश्च महात्मानौ किमनेनेति विस्मितौ ॥१६॥
"वन्येन फलमूलेन निरतौ वनवासिनौ ।
सुवर्णेन हिरण्येन किं करिष्यावहे वने ?" ॥१७॥
तथा तयोः प्रब्रुवतोः कौतूहलसमन्विताः ।
श्रोतारश्चैव रामश्च सर्व एव सुविस्मिताः ॥१८॥
तस्य चैवागमं रामः काव्यस्य श्रोतुमुत्सुकः ।
पप्रच्छ सुमहातेजास्तावुभौ मुनिदारकौ ॥१९॥
"किम्प्रमाणमिदं काव्यं, का प्रतिष्ठा महात्मनः ?
कर्ता काव्यस्य महतः क्व चासौ मुनिपुङ्गवः ?" ॥२०॥

पृच्छन्तं राघवं वाक्यमूचतुर्मुनिदारकौ ।
"वाल्मीकिर्भगवान् कर्ता सम्प्राप्तो यज्ञसंविधम् ॥२१॥
आदिप्रभृति वै राजन् ! पञ्च सर्गशतानि च ।
काण्डानि षट् कृतानीह सोत्तराणि महात्मना ॥२२॥
कृतानि गुरुणास्माकमृषिणा चरितं तव ।
प्रतिष्ठा जीवितं यावत् तावत् सर्वस्य वर्तते ॥२३॥

यदि बुद्धिः कृता राजन् ! श्रवणाय महारथ !
कर्मान्तरे क्षणीभूतस्तच्छृणुष्व सहानुजः" ॥२४॥
"बाढ"मित्यब्रवीद्रामस्तौ चानुज्ञाप्य राघवौ ।
प्रहृष्टौ जग्मतुः स्थानं यत्रास्ते मुनिपुङ्गवः ॥२५॥
रामो बहून्यहान्येव तद् गीतं परमं शुभम् ।
शुश्राव मुनिभिः सार्द्धं पार्थिवैः सह वानरैः ॥२६॥
तस्मिन् गीते तु विज्ञाय सीतापुत्रौ कुशीलवौ ।
तस्याः परिषदो मध्ये रामो वचनमब्रवीत् ॥२७॥
दूतान् शुद्धसमाचारानाहूयात्ममनीषया ।
"मद्वचो ब्रूत गच्छध्वमितो भगवतोऽन्तिके ॥२८॥
'यदि शुद्धसमाचारा यदि वा वीतकल्मषा ।
करोत्विहात्मनः शुद्धिमनुमान्य महामुनिम्' ॥२९॥
छन्दं मुनेश्च विज्ञाय सीतायाश्च मनोगतम् ।
प्रत्ययं दातुकामायास्ततः शंसत मे लघु ॥३०॥
श्वः प्रभाते तु शपथं मैथिली जनकात्मजा ।
करोतु परिषन्मध्ये शोधनार्थं ममैव च" ॥३१॥
श्रुत्वा तु राघवस्यैतद्वचः परममद्भुतम् ।
दूताः सम्प्रययुर्वाटं यत्र वै मुनिपुङ्गवः ॥३२॥
ते प्रणम्य महात्मानं ज्वलन्तममितप्रभम् ।
ऊचुस्ते रामवाक्यानि मृदूनि मधुराणि च ॥३३॥
तेषां तद्भाषितं श्रुत्वा रामस्य च मनोगतम् ।
विज्ञाय सुमहातेजा मुनिर्वाक्यमथाब्रवीत् ॥३४॥

“एवं भवतु, भद्रं वो, यथा वदति राघवः ।
तथा करिष्यते सीता, दै ” ॥३५॥
तथोक्ता मुनिना सर्वे राजदूता महौजसः ।
प्रत्येत्य राघवं सर्वे मुनिवाक्यं बभाषिरे ॥३६॥
ततः प्रहृष्टः काकुत्स्थः श्रुत्वा वाक्यं महात्मनः ।
ऋषींस्तत्र समेतांश्च राज्ञश्चैवाभ्यभाषत ॥३७॥
“भगवन्तः सशिष्या वै सानुगाश्च नराधिपाः ।
पश्यन्तु सीताशपथं यश्चैवान्योऽपि काङ्क्षते” ॥३८॥
तस्य तद् वचनं श्रुत्वा राघवस्य महात्मनः ।
सर्वेषामृषिमुख्यानां साधुवादो महानभूत् ॥३९॥
राजानश्च महात्मानः प्रशंसन्ति स्म राघवम् ।
“उपपन्नं नरश्रेष्ठ ! त्वय्येव भुवि नान्यतः” ॥४०॥
एवं विनिश्चयं कृत्वा “श्वोभूत” इति राघवः ।
विसर्जयामास तदा सर्वांस्तान् शत्रुसूदनः ॥४१॥
तस्यां रजन्यां व्युष्टायां यज्ञवाटं गतो नृपः ।
ऋषीन् सर्वान् महातेजाः शब्दापयति राघवः ॥४२॥
अथ तत्र समाजग्मुर्मुनयः संशितव्रताः ।
कौतूहलसमाविष्टाः सर्व एव समन्ततः ॥४३॥
राक्षसाश्च महावीर्या वानराश्च महाबलाः ।
क्षत्रिया ये च शूद्राश्च वैश्याश्चैव सहस्रशः ॥४४॥
नानादेशागताश्चैव ब्राह्मणाः संशितव्रताः ।
सीताशपथवीक्षार्थं सर्व एव समागताः ॥४५॥

तदा समागतं सर्वमश्मभूतमिवाचलम् ।
श्रुत्वा मुनिवरस्तूर्णं ससीतः समुपागमत् ॥४६॥
तमृषिं पृष्ठतः सीता अन्वगच्छदवाङ्मुखी ।
रामं मनोगतं कृत्वा साश्रुनेत्रा कृताञ्जलिः ॥४७॥
तां दृष्ट्वा श्रुतिमायान्तीं ब्रह्माणमनुगामिनीम् ।
वाल्मीकेः पृष्ठतः सीतां साधुवादो महानभूत् ॥४८॥
ततो हलहलाशब्दः सर्वेषामेवमाबभौ ।
दुःखजन्मविशालेन शोकेनाकुलितात्मनाम् ॥४९॥
"साधु रामे"ति केचित्तु "साधु सीते"ति चापरे ।
"उभावेव" च तत्रान्ये प्रेक्षकाः सम्प्रचुक्रुशुः ॥५०॥
ततो मध्ये जनौघस्य प्रविश्य मुनिपुङ्गवः ।
सीतासहायो वाल्मीकिरिति होवाच राघवम् ॥५१॥
"इयं दाशरथे ! सीता सुव्रता धर्मचारिणी ।
अपवादात् परित्यक्ता ममाश्रम-समीपतः ॥५२॥
लोकापवाद-भीतस्य तव राम ! महाव्रत !
प्रत्ययं दास्यते सीता तामनुज्ञातुमर्हसि ॥५३॥
इमौ च जानकीपुत्रावुभौ च यमजातकौ ।
सुतौ तवैव दुर्धर्षौ सत्यमेतद् ब्रवीमि ते ॥५४॥
प्रचेतसोऽहं दशमः पुत्रो राघवनन्दन !
न स्मराम्यनृतं वाक्यमिमौ हि तव पुत्रकौ ॥५५॥
बहुवर्षसहस्राणि तपश्चर्या मया कृता ।
नोपाश्नीयां फलं तस्या दुष्टेयं यदि मैथिली ॥५६॥

मनसा, कर्मणा, वाचा भूतपूर्वं न किल्बिषम् ।
तस्याः फलमुपाश्नीयामपापा यदि मैथिली ॥५७॥
अहं पञ्चसु भूतेषु मनःषष्ठेषु राघव !
विचिन्त्य सीतां शुद्धेति जग्राह वननिर्झरे ॥५८॥

इयं शुद्धसमाचारा अपापा पतिदेवता ।
लोकापवादभीतस्य प्रत्ययं तव दास्यति ॥५९॥

तस्मादियं नरवरात्मज ! शुद्धभावा
दिव्येन दृष्टिविषयेण मया प्रदिष्टा ।
लोकापवाद-कलुषीकृतचेतसा यत्
त्यक्ता त्वया प्रियतमा विदितापि शुद्धा" ॥६०॥

वाल्मीकिनैवमुक्तस्तु राघवः प्रत्यभाषत ।
प्राञ्जलिर्जनतामध्ये दृष्ट्वा तां वरवर्णिनीम् ॥६१॥

"एवमेतन्महाभाग ! यथा वदसि धर्मवित् !
प्रत्ययस्तु मम ब्रह्मंस्तव वाक्यैरकल्मषैः ॥६२॥
प्रत्ययश्च पुरा दत्तो वैदेह्या सुरसन्निधौ ।
शपथश्च कृतस्तत्र तेन वेश्म प्रवेशिता ॥६३॥
लोकापवादो बलवान् येन त्यक्ता हि मैथिली ।
सेयं लोकभयाद् ब्रह्मन्नपापेत्यभिजानता ।
परित्यक्ता मया सीता तद्भवान् क्षन्तुमर्हति ॥६४॥
जानामि चेमौ पुत्रौ मे यमजातौ कुशीलवौ ।
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे" ॥६५॥

अभिप्रायं तु विज्ञाय रामस्य सुरसत्तमाः ।
सीतायाः शपथे तस्मिन् सर्व एव समागताः ॥६६॥
पितामहं पुरस्कृत्य सर्व एव समागताः ।
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः ॥६७॥
साध्याश्च देवाः सर्वे ते सर्वे च परमर्षयः ।
नागाः सुपर्णाः सिद्धाश्च ते सर्वे हृष्टमानसाः ।
सीता-शपथसम्भ्रान्ताः सर्व एव समागताः ॥६८॥
दृष्ट्वा देवानृषींश्चैव राघवः पुनरब्रवीत् ।
प्रत्ययो मे मुनिश्रेष्ठ ! ऋषिवाक्यैरकल्मषैः ।
शुद्धायां जगतो मध्ये वैदेह्यां प्रीतिरस्तु मे" ॥६९॥
ततो वायुः शुभः पुण्यो दिव्यगन्धो मनोरमः ।
तं जनौघं सुरश्रेष्ठो ह्लादयामास सर्वतः ॥७०॥
तदद्भुतमिवाचिन्त्यं निरैक्षन्त समाहिताः ।
मानवाः सर्वराष्ट्रेभ्यः पूर्वं कृतयुगे यथा ॥७१॥
सर्वान् समागतान् दृष्ट्वा सीता काषायवासिनी ।
अब्रवीत् प्राञ्जलिर्वाक्यमधोदृष्टिरवाङ्मुखी ॥७२॥
"यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥७३॥
मनसा, कर्मणा, वाचा यथा रामं समर्चये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥७४॥
यथैतत् सत्यमुक्तं मे, वेद्मि रामात् परं न च ।
तथा मे माधवी देवी विवरं दातुमर्हति" ॥७५॥

तथा शपन्त्यां वैदेह्यां प्रादुरासीत् तदद्भुतम्
भूतलादुत्थितं दिव्यं सिंहासनमनुत्तमम् ॥७६॥
ध्रियमाणं शिरोभिस्तु नागैरमितविक्रमैः ।
दिव्यं दिव्येन वपुषा दिव्यरत्नविभूषितैः ॥७७॥
तस्मिंस्तु धरणी देवी बाहुभ्यां गृह्य मैथिलीम्
स्वागतेनाभिनन्द्यैनामासने चोपवेशयत् ॥७८॥

तामासनगतां दृष्ट्वा प्रविशन्तीं रसातलम् ।
पुष्पवृष्टिरविच्छिन्ना दिव्या सीतामवाकिरत् ॥७९॥
साधुकारश्च सुमहान् देवानां सहसोत्थितः ।
"साधु साध्विति वै सीते! यस्यास्ते शीलमीदृशम्" ॥८०॥
एवं बहुविधा वाचो ह्यन्तरिक्षगताः सुराः ।
व्याजह्रुर्हृष्टमनसो दृष्ट्वा सीताप्रवेशनम् ॥८१॥
यज्ञवाट-गताश्चापि मुनयः सर्वे एव ते ।
राजानश्च नरव्याघ्रा विस्मयान्नोपरेमिरे ॥८२॥
अन्तरिक्षे च भूमौ च सर्वे स्थावरजङ्गमाः ।
दानवाश्च महाकायाः पाताले पन्नगाधिपाः ॥८३॥
केचिद् विनेदुः संहृष्टाः, केचिद् ध्यानपरायणाः ।
केचिद्रामं निरीक्षन्ते, केचित् सीतामचेतसः ॥८४॥
सीताप्रवेशनं दृष्ट्वा तेषामासीत् समागमः ।
तन्मुहूर्तमिवात्यर्थं समं सम्मोहितं जगत् ॥८५॥

## लक्ष्मणवर्जनम्

कस्यचित्त्वथ कालस्य रामे धर्मपरे स्थिते ।
कालस्तापसरूपेण राजद्वारमुपागमत् ॥१॥

"दूतो ह्यतिबलस्याहं महर्षेरमितौजसः ।
रामं दिदृक्षुरायातः कार्येण हि महाबल !" ॥२॥

तस्य तद्वचनं श्रुत्वा सौमित्रिस्त्वरयान्वितः ।
न्यवेदयत रामाय तापसं तं समागतम् ॥३॥

"जयस्व राजधर्मेण उभौ लोकौ महाद्युते ।
दूतस्त्वां द्रष्टुमायातस्तपसा भास्करप्रभः" ॥४॥

तद्वाक्यं लक्ष्मणोक्तं वै श्रुत्वा राम उवाच ह ।
"प्रवेश्यतां मुनिस्तात", महौजास्तस्य वाक्यधृक् ॥५॥

सौमित्रिस्तु "तथे"त्युक्त्वा प्रावेशयत तं मुनिम् ।
ज्वलन्तमिव तेजोभिः प्रदहन्तमिवांशुभिः ॥६॥

सोऽभिगम्य रघुश्रेष्ठं दीप्यमानं स्वतेजसा ।
ऋषिर्मधुरया वाचा "वर्धस्वे"त्याह राघवम् ॥७॥

तस्मै रामो महातेजाः पूजामर्घ्यपुरोगमाम् ।
ददौ कुशलमव्यग्रं प्रष्टुं चैवोपचक्रमे ॥८॥

पृष्टश्च कुशलं तेन रामेण वदतां वरः ।
आसने काञ्चने दिव्ये निषसाद महायशाः ॥८॥

तमुवाच ततो रामः, "स्वागतं ते महामते !
प्रापयास्य च वाक्यानि यतो दूतस्त्वमागतः" ॥१०॥
चोदितो राजसिंहेन मुनिर्वाक्यमभाषत ।
"द्वन्द्वे ह्येतत् प्रवक्तव्यं हितं वै यद्यवेक्षसे ॥११॥
यः शृणोति निरीक्षेद्वा स वध्यो भविता तव ।
भवेद्वै मुनिमुख्यस्य वचनं यद्यवेक्षसे" ॥१२॥
"तथे"ति च प्रतिज्ञाय रामो लक्ष्मणमब्रवीत् ।
"द्वारि तिष्ठ महाबाहो प्रतिहारं विसर्जय ॥१३॥
स मे वध्यः खलु भवेद्वाचं द्वन्द्वसमीरिताम् ।
ऋषेर्मम च सौमित्रे पश्येद्वा शृणुयाच्च यः" ॥१४॥
ततो निक्षिप्य काकुत्स्थो लक्ष्मणं द्वारि संग्रहम् ।
तमुवाच, "मुने, वाक्यं कथयस्वे"ति राघवः ॥१५॥
"यत्ते मनीषितं वाक्यं येन वासि समाहितः ।
कथयस्वाविशङ्कस्त्वं ममापि हृदि वर्तते" ॥१६॥
"शृणु राजन् महासत्त्व यदर्थमहमागतः ।
पितामहेन देवेन प्रेषितोऽस्मि महाबल ! ॥१७॥
तवाहं पूर्वके भावे पुत्रः परपुरञ्जय !
मायासम्भावितो वीर कालः सर्वसमाहरः ॥१८॥
पितामहश्च भगवानाह लोकपतिः प्रभुः ।
समयस्ते कृतः सौम्य लोकान् सम्परिरक्षितुम् ॥१९॥
संक्षिप्य हि पुरा लोकान्मायया स्वयमेव हि ।
महार्णवे शयानोऽप्सु मां त्वं पूर्वमजीजनः ॥२०॥

भोगवन्तं ततो नागमनन्तमुदकेशयम् ।
मायया जनयित्वा त्वं द्वौ च सत्त्वौ महाबलौ ॥२१॥
मधुञ्च कैटभञ्चैव ययोरस्थिचयैर्वृता ।
इयं पर्वतसम्बाधा मेदिनी चाभवत्तदा ॥२२॥
पद्मे दिव्येऽर्कसङ्काशे नाभ्यामुत्पाद्य मामपि ।
प्राजापत्यं त्वया कर्म मयि सर्वं निवेशितम् ॥२३॥
सोऽहं सन्न्यस्तभारो हि त्वामुपास्य जगत्पतिम् ।
रक्षां विधत्स्व भूतेषु मम तेजस्करो भवान् ॥२४॥
ततस्त्वमसि दुर्धर्षात्तस्माद्भावात् सनातनात् ।
रक्षां विधास्यन् भूतानां विष्णुत्वमुपजग्मिवान् ॥२५॥
अदित्यां वीर्यवान् पुत्रो भ्रातॄणां वीर्यवर्धनः ।
समुत्पन्नेषु कृत्येषु तेषां साह्याय कल्पसे ॥२६॥
स त्वमुत्त्रास्यमानासु प्रजासु जगतो वर ।
रावणस्य वधाकाङ्क्षी मानुषेषु मनोऽदधाः ॥२७॥
दशवर्षसहस्राणि दशवर्षशतानि च ।
कृत्वा वासस्य नियमं स्वयमेवात्मना पुरा ॥२८॥
स त्वं मनोमयः पुत्रः पूर्णायुर्मानुषेष्विह ।
कालो नरवरश्रेष्ठ समीपमुपवर्तितुम् ॥२९॥
यदि भूयो महाराज प्रजा इच्छस्युपासितुम् ।
वस वा वीर भद्रं ते एवमाह पितामहः ॥३०॥
अथवा विजिगीषा ते सुरलोकाय राघव ।
सनाथा विष्णुना देवा भवन्तु विगतज्वराः" ॥३१॥

श्रुत्वा पितामहेनोक्तं वाक्यं कालसमीरितम् ।
राघवः प्रहसन् वाक्यं सर्वसंहारमब्रवीत् ॥३२॥
"श्रुत्वा मे देवदेवस्य वाक्यं परममद्भुतम् ।
प्रीतिर्हि महती जाता तवागमनसम्भवा ॥३३॥
त्रयाणामपि लोकानां कार्यार्थं मम सम्भवः ।
भद्रं तेऽस्तु गमिष्यामि यत एवाहमागतः ॥३४॥
हृद्गतो ह्यसि सम्प्राप्तो न मे तत्र विचारणा ।
मया हि सर्वकृत्येषु देवानां वशवर्तिनाम् ।
स्थातव्यं सर्वसंहार, यथा ह्याह पितामहः" ॥३५॥

तथा तयोः संवदतोर्दुर्वासा भगवानृषिः ।
रामस्य दर्शनाकाङ्क्षी राजद्वारमुपागमत् ॥३६॥
सोऽभिगम्य तु सौमित्रिमुवाच ऋषिसत्तमः ।
"रामं दर्शय मे शीघ्रं पुरा मेऽर्थोऽतिवर्तते" ॥३७॥

मुनेस्तु भाषितं श्रुत्वा लक्ष्मणः परवीरहा ।
अभिवाद्य महात्मानं वाक्यमेतदुवाच ह ॥३८॥
"किं कार्यं ब्रूहि भगवन्, को ह्यर्थः किं करोम्यहम् ?
व्यग्रो हि राघवो ब्रह्मन् मुहूर्तं परिपाल्यताम्" ॥३८॥

तच्छ्रुत्वा ऋषिशार्दूलः क्रोधेन कलुषीकृतः ।
उवाच लक्ष्मणं वाक्यं निर्दहन्निव चक्षुषा ॥४०॥
"अस्मिन् क्षणे मां सौमित्रे रामाय प्रतिवेदय ।
विषयं त्वां पुरं चैव शपिष्ये राघवं तथा ॥४१॥

भरतश्चैव सौमित्रे युष्माकं या च सन्ततिः ।
न हि शक्ष्याम्यहं भूयो मन्युं धारयितुं हृदि" ॥४२॥
तच्छ्रुत्वा घोरसङ्काशं वाक्यं तस्य महात्मनः ।
चिन्तयामास मनसा तस्य वाक्यस्य निश्चयम् ॥४३॥
एकस्य मरणं मेऽस्तु, मा भूत् सर्वविनाशनम् ।
इति बुद्ध्या विनिश्चित्य राघवाय न्यवेदयत् ॥४४॥

लक्ष्मणस्य वचः श्रुत्वा रामः कालं विसृज्य च ।
निःसृत्य त्वरितो राजा अत्रेः पुत्रं ददर्श ह ॥४५॥
सोऽभिवाद्य महात्मानं ज्वलन्तमिव तेजसा ।
"किं कार्यमि"ति काकुत्स्थः कृताञ्जलिरभाषत ॥४६॥
तद्वाक्यं राघवेणोक्तं श्रुत्वा मुनिवरः प्रभुः ।
प्रत्याह रामं दुर्वासाः, "श्रूयतां धर्मवत्सल ! ॥४७॥
अद्य वर्षसहस्रस्य समाप्तिर्मम राघव !
सोऽहं भोजनमिच्छामि यथासिद्धं तवानघ !" ॥४८॥

तच्छ्रुत्वा वचनं राजा राघवः प्रीतमानसः ।
भोजनं मुनिमुख्याय यथासिद्धमुपाहरत् ॥४९॥
स तु भुक्त्वा मुनिश्रेष्ठस्तदन्नममृतोपमम् ।
"साधु रामे"ति सम्भाष्य स्वमाश्रममुपागमत् ॥५०॥
संस्मृत्य कालवाक्यानि ततो दुःखमुपागमत् ।
दुःखेन च सुसन्तप्तः स्मृत्वा तद्घोरदर्शनम् ।
अवाङ्मुखो दीनमना व्याहर्तुं न शशाक ह ॥५१॥

ततो बुद्ध्या विनिश्चित्य कालवाक्यानि राघवः ।
नैतदस्तीति निश्चित्य तूष्णीमासीन्महायशाः ॥५२॥

अवाङ्मुखमथो दीनं दृष्ट्वा सोममिवाप्लुतम् ।
राघवं लक्ष्मणो वाक्यं हृष्टो मधुरमब्रवीत् ॥५३॥
"न सन्तापं महाबाहो मदर्थं कर्तुमर्हसि ।
पूर्वनिर्माणबद्धा हि कालस्य गतिरीदृशी ॥५४॥
जहि मां सौम्य विस्रब्धं प्रतिज्ञां परिपालय ।
हीनप्रतिज्ञाः काकुत्स्थ प्रयान्ति नरकं नराः ॥५५॥
यदि प्रीतिर्महाराज यद्यनुग्राह्यता मयि ।
जहि मां निर्विशङ्कस्त्वं धर्मं वर्धय राघव !" ॥५६॥

लक्ष्मणेन तथोक्तस्तु रामः प्रचलितेन्द्रियः ।
मन्त्रिणः समुपानीय तथैव च पुरोधसः ॥
अब्रवीच्च तदा वृत्तं तेषां मध्ये स राघवः ।
दुर्वासोऽभिगमं चैव प्रतिज्ञां तापसस्य च ॥५७-५८॥
तच्छ्रुत्वा मन्त्रिणः सर्वे सोपाध्यायाः समासत ।
वसिष्ठस्तु महातेजा वाक्यमेतदुवाच ह ॥५९॥
"दृष्टमेतन्महाबाहो क्षयं ते रोमहर्षणम् ।
लक्ष्मणेन वियोगश्च तव राम महायशः ॥६०॥
त्यजैनं बलवान् कालो मा प्रतिज्ञां वृथा कृथाः ।
प्रतिज्ञायां हि नष्टायां धर्मो हि विलयं व्रजेत् ॥६१॥
ततो धर्मे विनष्टे तु त्रैलोक्यं सचराचरम् ।
सदेवर्षिगणं सर्वं विनश्येत्तु न संशयः ॥६२॥

स त्वं पुरुषशार्दूल त्रैलोक्यस्याभिपालनात्।
लक्ष्मणेन विना चाद्य त्रैलोक्यं त्रातुमर्हसि" ॥६३॥

तेषां तत् समवेतानां वाक्यं धर्मार्थसंहितम्।
श्रुत्वा परिषदो मध्ये रामो लक्ष्मणमब्रवीत् ॥६४॥

"विसर्जये त्वां सौमित्रे, मा भूद्धर्मविपर्ययः।
त्यागो वधो वा विहितः साधूनामुभयं समम्" ॥६५॥

रामेण भाषिते वाक्ये बाष्पव्याकुलितेन्द्रियः।
लक्ष्मणस्त्वरितः प्रायात् स्वगृहं न विवेश ह ॥६६॥

स गत्वा सरयूतीरमुपस्पृश्य कृताञ्जलिः।
निगृह्य सर्वस्रोतांसि निःश्वासं न मुमोच ह ॥६७॥

अनिःश्वसन्तं युक्तं तं सशक्राः साप्सरोगणाः।
देवाः सर्षिगणाः सर्वे पुष्पैरभ्यकिरंस्तदा ॥६८॥

अदृश्यं सर्वमनुजैः सशरीरं महाबलम्।
प्रगृह्य लक्ष्मणं शक्रस्त्रिदिवं संविवेश ह ॥६९॥

ततो विष्णोश्चतुर्भागमागतं सुरसत्तमाः।
हृष्टाः प्रमुदिताः सर्वे पूजयन्ति स्म राघवम् ॥७०॥

# महाभारतम्

—o—

## जतुगृहदाहः



वैशम्पायन उवाच—

शृणु विस्तरशो राजन् वदतो मे परन्तप ।
दाहं जतुगृहस्यैतत् पाण्डवानां च मोक्षणम् ॥१॥
प्राणाधिकं भीमसेनं कृतविद्यं धनञ्जयम् ।
दुर्योधनो लक्षयित्वा पर्यतप्यत दुर्मनाः ॥२॥
ततो वैकर्तनः कर्णः शकुनिश्चापि सौबलः ।
अनेकैरभ्युपायैस्ते जिघांसन्ति स्म पाण्डवान् ॥३॥
पाण्डवा अपि तत् सर्वं प्रतिचक्रुर्यथागतम् ।
उद्भावनमकुर्वन्तो विदुरस्य मते स्थिताः ॥४॥
गुणैः समुदितान् दृष्ट्वा पौराः पाण्डुसुतांस्तदा ।
कथयाञ्चक्रिरे तेषां गुणान् संसत्सु भारत ॥५॥
राज्यप्राप्तिं च सम्प्राप्तं ज्येष्ठं पाण्डुसुतं तदा ।
कथयन्ति स्म सम्भूय चत्वरेषु सभासु च ॥६॥

"प्रज्ञाचक्षुरचक्षुष्ट्वाद् धृतराष्ट्रो जनेश्वरः ।
राज्यं न प्राप्तवान् पूर्वं स कथं नृपतिर्भवेत् ॥७॥
तथा शान्तनवो भीष्मः सत्यसन्धो महाव्रतः ।
प्रत्याख्याय पुरा राज्यं न स जातु ग्रहीष्यति ॥८॥
ते वयं पाण्डवज्येष्ठं तरुणं वृद्धशीलिनम् ।
अभिषिञ्चाम साध्वद्य सत्यकारुण्यवेदिनम् ॥९॥
स हि भीष्मं शान्तनवं धृतराष्ट्रं च धर्मवित् ।
सपुत्रं विविधैर्भोगैर्योजयिष्यति पूजयन्" ॥१०॥
तेषां दुर्योधनः श्रुत्वा तानि वाक्यानि जल्पताम् ।
युधिष्ठिरानुरक्तानां पर्यतप्यत दुर्मतिः ॥११॥
स तप्यमानो दुष्टात्मा तेषां वाचो न चक्षमे ।
ईर्ष्यया चापि सन्तप्तो धृतराष्ट्रमुपागमत् ॥१२॥
ततो विरहितं दृष्ट्वा पितरं प्रतिपूज्य सः ।
पौरानुरागसन्तप्तः पश्चादिदमभाषत ॥१३॥

दुर्योधन उवाच—

श्रुता मे जल्पतां तात पौराणामशिवा गिरः ।
त्वामनादृत्य भीष्मं च पतिमिच्छन्ति पाण्डवम् ॥१४॥
मतमेतच्च भीष्मस्य न स राज्यं बुभुक्षति ।
अस्माकं तु परां पीडां चिकीर्षन्ति पुरे जनाः ॥१५॥
पितृतः प्राप्तवान् राज्यं पाण्डुरात्मगुणैः पुरा ।
त्वमन्धगुणसंयोगात् प्राप्तं राज्यं न लब्धवान् ॥१६॥

स एष पाण्डोर्दायाद्यं यदि प्राप्नोति पाण्डवः ।
तस्य पुत्रो ध्रुवं प्राप्तस्तस्य तस्यापि चापरः ॥१७॥
ते वयं राजवंशेन हीनाः सह सुतैरपि ।
अवज्ञाता भविष्यामो लोकस्य जगतीपते ! ॥१८॥
सततं निरयं प्राप्ताः परपिण्डोपजीविनः ।
न भवेम यथा राजंस्तथा नीतिर्विधीयताम् ॥१९॥
यदि त्वं हि पुरा राजन्निदं राज्यमवाप्तवान् ।
ध्रुवं प्राप्स्याम च वयं राज्यमप्यवशे जने ॥२०॥
पाण्डवेभ्यो भयं न स्यात् तान् विवासयतां भवान् ।
निपुणेनाभ्युपायेन नगरं वारणावतम् ॥२१॥
धृतराष्ट्रस्तु पुत्रस्य श्रुत्वा वचनमीरितम् ।
मुहूर्तमिव सञ्चिन्त्य दुर्योधनमथाब्रवीत् ॥२२॥

धृतराष्ट्र उवाच–

धर्मनित्यः सदा पाण्डुस्तथा धर्मपरायणः ।
सर्वेषु ज्ञातिषु तथा मयि त्वासीद् विशेषतः ॥२३॥
नासौ किञ्चिद् विजानाति भोजनादि चिकीर्षितम् ।
निवेदयति नित्यं हि मम राज्यं धृतव्रतः ॥२४॥
तस्य पुत्रो यथा पाण्डुस्तथा धर्मपरायणः ।
गुणवाँल्लोकविख्यातः पौरवाणां सुसम्मतः ॥२५॥
स कथं शक्यतेऽस्माभिरपाकर्तुं बलादितः ।
पितृपैतामहाद् राज्यात् ससहायो विशेषतः ॥२६॥

दुर्योधन उवाच—

स भवान् पाण्डवानाशु विवासयितुमर्हति ।
मृदुनैवाभ्युपायेन नगरं वारणावतम् ॥२७॥

वैशम्पायन उवाच—

ततो दुर्योधनो राजा सर्वास्ताः प्रकृतीः शनैः ।
अर्थमानप्रदानाभ्यां सञ्जहार सहानुजः ॥२८॥
धृतराष्ट्रप्रयुक्तास्ते केचित् कुशलमन्त्रिणः ।
कथयाञ्चक्रिरे रम्यं नगरं वारणावतम् ॥२९॥
कथ्यमाने तथा रम्ये नगरे वारणावते ।
गमने पाण्डुपुत्राणां जज्ञे तत्र मतिर्नृप ! ॥३०॥
यदा त्वमन्यत नृपो जातकौतूहला इति ।
उवाचैनानथ तदा पाण्डवानम्बिकासुतः ॥३१॥
"ममैते पुरुषा नित्यं कथयन्ति पुनः पुनः ।
रमणीयतमं लोके नगरं वारणावतम् ॥३२॥
ते ताता यदि मन्यध्वमुत्सवं वारणावते ।
सगणाः सानुयात्राश्च विहरध्वं यथामराः ।
कञ्चित् कालं विहृत्यैवमनुभूय परां मुदम् ।
इदं वै हास्तिनपुरं सुखिनः पुनरेष्यथ" ॥३४॥

वैशम्पायन उवाच—

धृतराष्ट्रस्य तं काममनुबुध्य युधिष्ठिरः ।
आत्मनश्चासहायत्वं तथेति प्रत्युवाच तम् ॥३५॥

ततः कृतस्वस्त्ययना राज्यलाभाय पार्थिवाः ।
कृत्वा सर्वाणि कार्याणि प्रययुर्वारणावतम् ॥३६॥

वैशम्पायन उवाच—

एवमुक्तेषु राज्ञा तु पाण्डुपुत्रेषु भारत ।
दुर्योधनः परं हर्षमगच्छत् स दुरात्मवान् ॥३७॥
स पुरोचनमेकान्तमानीय भरतर्षभ ।
गृहीत्वा दक्षिणे पाणौ सचिवं वाक्यमब्रवीत् ॥३८॥
"ममेयं वसुसम्पूर्णा पुरोचन वसुन्धरा ।
यथेयं मम तद्वत् ते स तां रक्षितुमर्हसि ॥३९॥
न हि मे कश्चिदन्योऽस्ति विश्वासिकतरस्त्वया ।
सहायो येन सन्धाय मन्त्रयेयं यथा त्वया ॥४०॥
संरक्ष तात मन्त्रञ्च सपत्नांश्च ममोद्धर ।
निपुणेनाभ्युपायेन यद् ब्रवीमि तथा कुरु ॥४१॥
पाण्डवा धृतराष्ट्रेण प्रेषिता वारणावतम् ।
उत्सवे विहरिष्यन्ति धृतराष्ट्रस्य शासनात् ॥४२॥
स त्वं रासभयुक्तेन स्यन्दनेनाशुगामिना ।
वारणावतमद्यैव यथा यासि तथा कुरु ॥४३॥
तत्र गत्वा चतुःशालं गृहं परमसंवृतम् ।
नगरोपान्तमाश्रित्य कारयेथा महाधनम् ॥४४॥
शणसर्जरसादीनि यानि द्रव्याणि कानिचित् ।
आग्नेयान्युत सन्तीह तानि तत्र प्रदापय ॥४५॥

सर्पिस्तैलवसाभिश्च लाक्षया चाप्यनल्पया ।
मृत्तिकां मिश्रयित्वा त्वं लेपं कुड्येषु दापय ॥४६॥
शणं तैलं घृतञ्चैव जतु दारूणि चैव हि ।
तस्मिन् वेश्मनि सर्वाणि निक्षिपेथाः समन्ततः ॥४७॥
यथा च तन्न पश्येरन् परीक्षन्तोऽपि पाण्डवाः ।
आग्नेयमिति तत् कार्यमपि चान्येऽपि मानवाः ॥४८॥
वेश्मन्येवं कृते तत्र कृत्वा तान् परमार्चितान् ।
वासयेथाः पाण्डवेयान् कुन्तीञ्च ससुहृज्जनाम् ॥४९॥
आसनानि च दिव्यानि यानानि शयनानि च ।
विधातव्यानि पाण्डूनां यथा तुष्येन्मे पिता ॥५०॥
यथा च तन्न जानन्ति नगरे वारणावते ।
तथा सर्वं विधातव्यं यावत् कालस्य पर्ययः ॥५१॥
ज्ञात्वा च तान् सुविश्वस्ताञ् शयानानकुतोभयान् ।
अग्निस्त्वया ततो देयो द्वारतस्तस्य वेश्मनः ॥५२॥
दह्यमाने स्वके गेहे दग्धा इति ततो जनाः ।
न गर्हयेयुरस्मान् वै पाण्डवार्थाय कर्हिचित्" ॥५३॥
स "तथे"ति प्रतिज्ञाय कौरवाय पुरोचनः ।
प्रायाद्रासभयुक्तेन स्यन्दनेनाशुगामिना ॥५४॥
स गत्वा त्वरितं राजन् दुर्योधनमते स्थितः ।
यथोक्तं राजपुत्रेण सर्वं चक्रे पुरोचनः ॥५५॥
पाण्डवास्तु रथान् युक्तान् सदश्वैरनिलोपमैः ।
आरोहमाणा भीष्मस्य पादौ जगृहुरार्तवत् ॥५६॥

राज्ञश्च धृतराष्ट्रस्य द्रोणस्य च महात्मनः ।
अन्येषाञ्चैव वृद्धानां कृपस्य विदुरस्य च ॥५७॥
एवं सर्वान् कुरून् वृद्धानभिवाद्य यतव्रताः ।
समालिङ्ग्य समानान् वै बालैश्चाप्यभिवादिताः ॥५८॥
सर्वा मातृस्तथापृच्छ्य कृत्वा चैव प्रदक्षिणम् ।
प्रकृतीरपि सर्वाश्च प्रययुर्वारणावतम् ॥५९॥
पौरेषु विनिवृत्तेषु विदुरः सर्वधर्मवित् ।
बोधयन् पाण्डवश्रेष्ठमिदं वचनमब्रवीत् ॥६०॥
"यो जानाति परप्रज्ञां नीतिशास्त्रानुसारिणीम् ।
विज्ञायेह तथा कुर्यादापदं निस्तरेद् यथा ॥६१॥
कक्षघ्नः शिशिरघ्नश्च महाकक्षे बिलौकसः ।
न दहेदिति चात्मानं यो रक्षति स जीवति ॥६२॥
नाचक्षुर्वेत्ति पन्थानं नाचक्षुर्विन्दते दिशः ।
नाधृतिर्बुद्धिमाप्नोति बुध्यस्वैवं प्रबोधितः ॥६३॥
चरन् मार्गान् विजानाति नक्षत्रैर्विन्दते दिशः ।
आत्मना चात्मनः पञ्च पीडयन्नानुपीड्यते" ॥६४॥
एवमुक्तः प्रत्युवाच धर्मराजो युधिष्ठिरः ।
विदुरं विदुषां श्रेष्ठं "ज्ञात"मित्येव पाण्डवः ॥६५॥
सत्कृताश्चैव पौरैस्ते पौरान् सत्कृत्य चानघाः ।
अलङ्कृतं जनाकीर्णं विविशुर्वारणावतम् ॥६६॥
तेभ्यो भक्ष्याणि पानानि शयनानि शुभानि च ।
आसनानि च मुख्यानि प्रददौ स पुरोचनः ॥६७॥

तत्र ते सत्कृतास्तेन सुमहार्हपरिच्छदाः ।
उपास्यमानाः पुरुषैरूषुः पुरनिवासिभिः ॥६८॥
दशरात्रोषितानां तु तत्र तेषां पुरोचनः ।
निवेदयामास गृहं शिवाख्यमशिवं तदा ॥६९॥
तत्रागारमभिप्रेक्ष्य सर्वधर्मभृतां वरः ।
उवाचाग्नेयमित्येवं भीमसेनं युधिष्ठिरः ॥७०॥
विदुरस्य सुहृत् कश्चित् खनकः कुशलो नरः ।
विविक्ते पाण्डवान् राजन्निदं वचनमब्रवीत् ॥७१॥
"प्रहितो विदुरेणास्मि खनकः कुशलो ह्यहम् ।
पाण्डवानां प्रियं कार्यमिति किं करवाणि वः ॥७२॥
कृष्णपक्षे चतुर्दश्यां रात्रावस्यां पुरोचनः ।
भवनस्य तव द्वारि प्रदास्यति हुताशनम् ॥७३॥
मात्रा सह प्रदग्धव्याः पाण्डवाः पुरुषर्षभाः ।
इति व्यवसितं तस्य धार्तराष्ट्रस्य दुर्मतेः" ॥७४॥
उवाच तं सत्यधृतिः कुन्तीपुत्रो युधिष्ठिरः ।
"अभिजानामि सौम्य त्वां सुहृदं विदुरस्य वै ॥७५॥
स भवान् मोक्षयत्वस्मान् यत्नेनास्माद्धुताशनात् ।
अस्मास्विह हि दग्धेषु सकामः स्यात् सुयोधनः" ॥७६॥
स "तथे"ति प्रतिश्रुत्य खनको यत्नमास्थितः ।
परिखामुत्किरन्नाम चकार च महाबिलम् ॥७७॥
चक्रे च वेश्मनस्तस्य मध्ये नातिमहद् बिलम् ।
कपाटयुक्तमज्ञातं समं भूम्याश्च भारत ! ॥७८॥

तांस्तु दृष्ट्वा सुमनसः परिसंवत्सरोषितान् ।
विश्वस्तानिव संलक्ष्य हर्षं चक्रे पुरोचनः ॥७९॥
पुरोचने तथा हृष्टे कौन्तेयोऽथ युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमौ प्रोवाच धर्मवित् ॥८०॥
"अस्मानयं सुविश्वस्तान् वेत्ति पापः पुरोचनः ।
वञ्चितोऽयं नृशंसात्मा कालं मन्ये पलायने" ॥८१॥
अथ दानापदेशेन कुन्ती ब्राह्मणभोजनम् ।
चक्रे निशि महाराज आजग्मुस्तत्र योषितः ॥८२॥
ता विहृत्य यथाकामं भुक्त्वा पीत्वा च भारत ।
जग्मुर्निशि गृहानेव समनुज्ञाप्य माधवीम् ॥८३॥
निषादी पञ्चपुत्रा तु तस्मिन् भोज्ये यदृच्छया ।
अन्नार्थिनी समभ्यागात् सपुत्रा कालचोदिता ॥८४॥
सा पीत्वा मदिरां मत्ता सपुत्रा मदविह्वला ।
सह सर्वैः सुतै राजंस्तस्मिन्नेव निवेशने ।
सुष्वाप विगतज्ञाना मृतकल्पा नराधिप ! ॥८५॥
अथ प्रवाते तुमुले निशि सुप्ते जने तदा ।
तदुपादीपयद् भीमः शेते यत्र पुरोचनः ॥८६॥
ततो जतुगृहद्वारं दीपयामास पाण्डवः ॥८७॥
पाण्डवाश्चापि ते सर्वे सह मात्रा सुदुःखिताः ।
बिलेन तेन निर्गत्य जग्मुर्दुतमलक्षिताः ॥८८॥
भीमसेनस्तु राजेन्द्र भीमवेगपराक्रमः ।
जगाम भ्रातॄनादाय सर्वान् मातरमेव च ॥८९॥

स्कन्धमारोप्य जननीं यमावङ्केन वीर्यवान् ।
पार्थौ गृहीत्वा पाणिभ्यां भ्रातरौ सुमहाबलः ॥८०॥
उरसा पादपान् भञ्जन् महीं पद्भ्यां विदारयन्
स जगामाशु तेजस्वी वातरंहा वृकोदरः ॥८१॥

पाण्डवाश्चापि निर्गत्य नगराद् वारणावतात् ।
नदीं गङ्गामनुप्राप्ता मातृषष्ठा महाबलाः ॥८२॥
दाशानां भुजवेगेन नद्याः स्रोतोजवेन च ।
वायुना चानुकूलेन तूर्णं पारमवाप्नुवन् ॥८३॥
ततो नावं परित्यज्य प्रययुर्दक्षिणां दिशम् ।
विज्ञाय निशि पन्थानं नक्षत्रगणसूचितम् ॥८४॥

# सावित्र्युपाख्यानम्[1]

आसीन्मद्रेषु धर्म्मात्मा राजा परमधार्मिकः।
पार्थिवोऽश्वपतिर्नाम सर्व्वभूतहिते रतः।
क्षमावाननपत्यश्च सत्यवाग् विजितेन्द्रियः।
अतिक्रान्तेन वयसा सन्तापमुपजग्मिवान् ॥१-२॥
अपत्यपरिलाभार्थं तीव्रं नियममास्थितः।
काले नियमिताहारो ब्रह्मचारी जितेन्द्रियः।
हुत्वा शतसहस्रं स सावित्र्या राजसत्तमः।
षष्ठे षष्ठे तदा काले बभूव मितभोजनः ॥३-४॥
पूर्णे त्वष्टादशे वर्षे सावित्री तुष्टिमभ्यगात्।
रूपिणी च तदा राजन्! दर्शयामास तं नृपम्।
उवाच चैनं वरदा वचनं पार्थिवं तदा ॥५॥
"वरं वृणीष्वाश्वपते! मद्रराज! यदीप्सितम्।
न प्रमादश्च धर्मेषु कर्त्तव्यस्ते कथञ्चन" ॥६॥

अश्वपतिरुवाच—

"अपत्यार्थः समारम्भः कृतो धर्मेप्सया मया।
पुत्रा मे बहवो देवि! भवेयुः कुलभावनाः" ॥७॥

सावित्र्युवाच—

"पूर्व्वमेव मया राजन्नभिप्रायमिमं तव।
ज्ञात्वा पुत्रार्थमुक्तो वै भगवांस्ते पितामहः।
कन्या तेजस्विनी सौम्य! क्षिप्रमेव भविष्यति ॥८॥

---

[1] वनपर्व्वणि—२९४-तमेऽध्याये।

उत्तरञ्च न ते किञ्चिद् व्याहर्तव्यं कथञ्चन ।
पितामह-नियोगेन तुष्टा ह्येतद् ब्रवीमि ते" ॥९॥

अन्तर्हितायां सावित्र्यां जगाम स्वपुरं नृपः ।
स्वराज्ये चावसद् वीरः प्रजा धर्मेण पालयन् ॥१०॥
कस्मिंश्चित् तु गते काले ज्येष्ठा वै धर्मचारिणी ।
महिषी सुषुवे तस्य कन्यां राजीवलोचनाम् ॥११॥
सावित्र्या प्रीतया दत्ता, सावित्र्या हुतया ह्यपि ।
"सावित्री"त्येव नामास्याश्चक्रुर्विप्रास्तथा पिता ॥१२॥

सा विग्रहवतीव श्रीर्व्यवर्द्धत नृपात्मजा ।
कालेन चापि सा कन्या यौवनस्था बभूव ह ॥१३॥
तां तु पद्मपलाशाक्षीं ज्वलन्तीमिव तेजसा ।
न कश्चिद् वरयामास तेजसा प्रतिवारितः ॥१४॥
यौवनस्थां तु तां दृष्ट्वा स्वां सुतां देवरूपिणीम् ।
अयाच्यमानाञ्च वरैर्नृपतिर्दुःखितोऽभवत् ॥१५॥

राजोवाच—

"पुत्रि ! प्रदानकालस्ते, न च कश्चिद् वृणोति माम् ।
स्वयमन्विच्छ भर्तारं गुणैः सदृशमात्मनः ॥१६॥
प्रार्थितः पुरुषो यश्च स निवेद्यस्त्वया मम ।
विमृश्याहं प्रदास्यामि वरय त्वं यथेप्सितम्" ॥१७॥

साभिवाद्य पितुः पादौ व्रीडितेव तपस्विनी ।
पितुर्वचनमाज्ञाय निर्जगामाविचारितम् ॥१८॥

सा हैमं रथमास्थाय स्थविरैः सचिवैर्वृता ।
तपोवनानि रम्याणि राजर्षीणां जगाम ह ॥१८॥
एवं तीर्थेषु सर्वेषु धनोत्सर्गं नृपात्मजा ।
कुर्वती द्विजमुख्यानां तं तं देशं जगाम ह ॥२०॥
अथ मद्राधिपो राजा नारदेन समागतः ।
उपविष्टः सभामध्ये कथायोगेन भारत ! ॥२१॥
ततोऽभिगम्य तीर्थानि सर्व्वाण्येवाश्रमांस्तथा ।
आजगाम पितुर्वेश्म सावित्री सह मन्त्रिभिः ॥२२॥

नारदेन सहासीनं सा दृष्ट्वा पितरं शुभा ।
उभयोरेव सहसा चक्रे पादाभिवन्दनम् ॥२३॥
सा "ब्रूहि विस्तरेणे"ति पित्रा सञ्चोदिता शुभा ।
तदेव तस्य वचनं प्रतिगृह्येदमब्रवीत् ॥२४॥

सावित्र्युवाच—

"आसीच्छाल्वेषु धर्मात्मा क्षत्रियः पृथिवीपतिः ।
द्युमत्सेन इति ख्यातः पश्चाच्चान्धो बभूव ह ॥२५॥
विनष्टचक्षुषस्तस्य बालपुत्त्रस्य धीमतः ।
सामीप्येन हृतं राज्यं छिद्रेऽस्मिन् पूर्व्ववैरिणा ॥२६॥
स बालवत्सया सार्द्धं भार्य्यया प्रस्थितो वनम् ।
महारण्यं गतश्चापि तपस्तेपे महाव्रतः ॥२७॥
तस्य पुत्त्रः पुरे जातः संवृद्धश्च तपोवने ।
सत्यवाननुरूपो मे भर्त्तेति मनसा वृतः" ॥२८॥

नारद उवाच—

"अहो बत महत् पापं सावित्र्या नृपते ! कृतम् ।
अजानन्त्या यदनया गुणवान् सत्यवान् वृतः ॥२९॥
सत्यं वदत्यस्य पिता, सत्यं माता प्रभाषते ।
तथास्य ब्राह्मणाश्चक्रुर्नामैतत् सत्यवानिति ॥३०॥
विवस्वानिव तेजस्वी बृहस्पतिसमो मतौ ।
महेन्द्र इव वीरश्च वसुधेव क्षमान्वितः ॥३१॥
ययातिरिव चोदारः सोमवत् प्रियदर्शनः ।
ब्रह्मण्यः सत्यवादी च शिविरौशीनरो यथा ॥३२॥
एको दोषोऽस्ति नान्योऽस्य, सोऽद्यप्रभृति सत्यवान् ।
संवत्सरेण क्षीणायुर्देहन्यासं करिष्यति" ॥३३॥

राजोवाच—

"एहि सावित्रि ! गच्छस्व, अन्यं वरय शोभने !
तस्य दोषो महानेको गुणानाक्रम्य च स्थितः" ॥३४॥

सावित्र्युवाच—

"सकृदंशो निपतति, सकृत् कन्या प्रदीयते ।
सकृदाह 'ददानी'ति, त्रीण्येतानि सकृत् सकृत् ॥३५॥
दीर्घायुरथवाल्पायुः सगुणो निर्गुणोऽपि वा ।
सकृद् वृतो मया भर्त्ता न द्वितीयं वृणोम्यहम् ॥३६॥
मनसा निश्चयं कृत्वा ततो वाचाभिधीयते ।
क्रियते कर्मणा पश्चात्, प्रमाणं मे मनस्ततः" ॥३७॥

नारद उवाच—

"स्थिरा बुद्धिर्नरश्रेष्ठ ! सावित्र्या दुहितुस्तव ।
नैषा वारयितुं शक्या धर्मादस्मात् कथञ्चन ॥३८॥
नान्यस्मिन् पुरुषे सन्ति ये सत्यवति वै गुणाः ।
प्रदानमेव तस्मान्मे रोचते दुहितुस्तव" ॥३८॥

राजोवाच—

"अविचाल्यमेतदुक्तं तथ्यञ्च भवता वचः ।
करिष्याम्येतदेवं च गुरुर्हि भगवान् मम" ॥४०॥

नारद उवाच—

"अविघ्नमस्तु सावित्र्याः प्रदाने दुहितुस्तव ।
साधयिष्याम्यहं तावत् सर्व्वेषां भद्रमस्तु वः" ॥४१॥

ततो वृद्धान् द्विजान् सर्व्वान् ऋत्विजः सपुरोहितान् ।
राजाहूय दिने पुण्ये प्रययौ सह कन्यया ॥४२॥
मेध्यारण्यं स गत्वा च द्युमत्सेनाश्रमं नृपः ।
पद्भ्यामेव द्विजैः सार्द्धं राजर्षिं तमुपागमत् ॥४३॥
स राजा तस्य राजर्षेः कृत्वा पूजां यथार्हतः ।
वाचा सुनियतो भूत्वा चकारात्मनिवेदनम् ॥४४॥
तस्यार्घ्यमासनं चैव समावेद्य स धर्मवित् ।
"किमागमनमि"त्येवं राजा राजानमब्रवीत् ॥४५॥

अश्वपतिरुवाच—

"सावित्री नाम राजर्षे ! कन्येयं मम शोभना ।
तां स्वधर्मेण धर्मज्ञ ! स्नुषार्थे त्वं गृहाण मे" ॥४६॥

द्युमत्सेन उवाच—

"च्युताः स्म राज्याद् वनवासमाश्रिता-
श्चराम धर्मं नियतास्तपस्विनः।
कथं त्वनर्हा वनवासमाश्रमे
निवत्स्यते क्लेशमिमं सुता तव ?" ॥४७॥

अश्वपतिरुवाच—

"मामां नार्हसि मे हन्तुं सौहृदात् प्रणतस्य च।
अभितश्चागतं प्रेम्णा प्रत्याख्यातुं न मार्हसि" ॥४८॥

द्युमत्सेन उवाच—

"पूर्वमेवाभिलषितः सम्बन्धो मे त्वया सह।
भ्रष्टराज्यस्त्वहमिति तत एतद् विचारितम् ॥४९॥
अभिप्रायस्त्वयं यो मे पूर्वमेवाभिकाङ्क्षितः।
स निर्वर्त्ततु मेऽद्यैव काङ्क्षितो ह्यसि मेऽतिथिः" ॥५०॥

ततः सर्वान् समानाय्य द्विजानाश्रमवासिनः।
यथाविधि समुद्वाहं कारयामासतुर्नृपौ ॥५१॥
दत्त्वा सोऽश्वपतिः कन्यां यथार्हं सपरिच्छदम्।
ययौ स्वमेव भवनं युक्तः परमया मुदा ॥५२॥
सत्यवानपि तां भार्य्यां लब्ध्वा सर्वगुणान्विताम्।
मुमुदे सा च तं लब्ध्वा भर्त्तारं मनसेप्सितम् ॥५३॥
गते पितरि सर्वाणि संन्यस्याभरणानि सा।
जगृहे वल्कलान्येव वस्त्रं काषायमेव च ॥५४॥

परिचारैर्गुणैश्चापि प्रश्रयेण दमेन च ।
सर्वकामक्रियाभिश्च सर्वेषां तुष्टिमादधे ॥५५॥
एवं तत्राश्रमे तेषां तदा निवसतां सताम् ।
कालस्तपस्यतां कश्चिदपाक्रामत भारत ! ५६॥
सावित्र्यास्तु शयानायास्तिष्ठन्त्यास्तु दिवानिशम् ।
नारदेन यदुक्तं तद् वाक्यं मनसि वर्त्तते ॥५७॥
ततः काले बहुतिथे व्यतिक्रान्ते कदाचन ।
प्राप्तः स कालो मर्त्तव्यं यत्र सत्यवता नृप ! ॥५८॥
गणयन्त्याश्च सावित्र्या दिवसे दिवसे गते ।
यद् वाक्यं नारदेनोक्तं वर्त्तते हृदि नित्यशः ॥५९॥
चतुर्थेऽहनि मर्त्तव्यमिति सञ्चिन्त्य भामिनी ।
व्रतं त्रिरात्रमुद्दिश्य दिवारात्रं स्थिताभवत् ॥६०॥
श्वोभूते भर्त्तृमरणे सावित्र्या भरतर्षभ !
दुःखान्वितायास्तिष्ठन्त्याः सा रात्रिर्व्यत्यवर्त्तत ॥६१॥
अद्य तद्दिवसं चेति हुत्वा दीप्तं हुताशनम् ।
युगमात्रोदिते सूर्य्ये कृत्वा पौर्वाह्णिकीः क्रियाः ॥६२॥
ततः सर्वान् द्विजान् वृद्धान् श्वश्रूं श्वशुरमेव च ।
अभिवाद्यानुपूर्व्येण प्राञ्जलिर्नियता स्थिता ॥६३॥
अवैधव्याशिषस्ते तु सावित्र्यर्थं हिताः शुभाः ।
ऊचुस्तपस्विनः सर्वे तपोवन-निवासिनः ॥६४॥
"एवमस्त्वि"ति सावित्री ध्यानयोगपरायणा ।
मनसा ता गिरः सर्वाः प्रत्यगृह्णात् तपस्विनाम् ।

तं कालं तं मुहूर्त्तं च प्रतीक्षन्ती नृपात्मजा ।
यथोक्तं नारदवचश्चिन्तयन्ती मुहुःखिता ॥६५-६६॥
ततस्तु श्वश्रू-श्वशुरावूचतुस्तां नृपात्मजाम् ।
एकान्तमास्थितां वाक्यं प्रीत्या भरतसत्तम ! ॥६७॥

श्वशुरावूचतुः—

"व्रतं यथोपदिष्टं तु तथा तत् पारितं त्वया ।
आहारकालः सम्प्राप्तः क्रियतां तदनन्तरम्" ॥६८॥

सावित्र्युवाच—

"अस्तं गते मयादित्ये भोक्तव्यं कृतकामया ।
एष मे हृदि सङ्कल्पः समयश्च कृतो मया" ॥६९॥
एवं सम्भाषमाणायाः सावित्र्या भोजनं प्रति ।
स्कन्धे परशुमादाय सत्यवान् प्रस्थितो वनम् ॥७०॥
सावित्री त्वाह भर्त्तारं, "नैकस्त्वं गन्तुमर्हसि ।
सह त्वया गमिष्यामि, न हि त्वां हातुमुत्सहे" ॥७१॥

सत्यवानुवाच—

"वनं न गतपूर्वं ते दुःखः पन्थाश्च भाविनि !
व्रतोपवासक्षामा च कथं पद्भ्यां गमिष्यसि ?" ॥७२॥

सावित्र्युवाच—

"उपवासान्न मे ग्लानिर्नास्ति चापि परिश्रमः ।
गमने च कृतोत्साहां प्रतिषेद्धुं न मार्हसि" ॥७३॥

सत्यवानुवाच—

"यदि ते गमनोत्साहः करिष्यामि तव प्रियम् ।
मम त्वामन्त्रय गुरून् न मां दोषः स्पृशेदयम्" ॥७४॥

साभिवाद्याब्रवीच्छ्वश्रूं श्वशुरं च महाव्रता ।
"अयं गच्छति मे भर्ता फलाहारो महावनम् ॥७५॥
इच्छेयमभ्यनुज्ञाता सह यास्याम्यहं वनम् ।
वनं कुसुमितं द्रष्टुं परं कौतूहलं हि मे" ॥७६॥
उभाभ्यामभ्यनुज्ञाता सा जगाम यशस्विनी ।
सह भर्त्रा हसन्तीव हृदयेन विदूयता ॥७७॥

सा वनानि विचित्राणि रमणीयानि सर्व्वशः ।
मयूरगण-जुष्टानि ददर्श विपुलेक्षणा ॥७८॥
नदीः पुण्यवहाश्चैव पुष्पितांश्च नगोत्तमान् ।
सत्यवानाह "पश्ये"ति सावित्रीं मधुरं वचः ॥७९॥
निरीक्षमाणा भर्त्तारं सर्व्वावस्थमनिन्दिता ।
मृतमेव हि तं मेने काले मुनिवचः स्मरन् ॥८०॥
अनुव्रजन्ती भर्त्तारं जगाम मृदुगामिनी ।
द्विधेव हृदयं कृत्वा तं च कालमवेक्षती ॥८१॥

अथ भार्य्यासहायः स फलान्यादाय वीर्य्यवान् ।
कठिनं पूरयामास, ततः काष्ठान्यपाटयत् ॥८२॥
तस्य पाटयतः काष्ठं स्वेदो वै समजायत ।
व्यायामेन च तेनास्य जज्ञे शिरसि वेदना ॥८३॥

सोऽभिगम्य प्रियां भार्य्यामुवाच श्रमपीड़ितः ।
"व्यायामेन ममानेन जाता शिरसि वेदना ॥८४॥
अङ्गानि चैव सावित्रि ! हृदयं दूयतीव च ।
अस्वस्थमिव चात्मानं लक्षये मितभाषिणि ! ॥८५॥
शूलैरिव शिरो विद्धमिदं संलक्षयाम्यहम् ।
तत् स्वप्तुमिच्छे कल्याणि ! न स्थातुं शक्तिरस्ति

सा समासाद्य सावित्री भर्त्तारमुपगम्य च ।
उत्सङ्गेऽस्य शिरः कृत्वा निषसाद महीतले ॥८७॥
ततः सा नारदवचो विमृशन्ती तपस्विनी ।
तं मुहूर्त्तं क्षणं वेलां दिवसं च युयोज ह ॥८८॥
मुहूर्त्तादेव चापश्यत् पुरुषं रक्तवाससम् ।
बद्धमौलिं वपुष्मन्तमादित्य-समतेजसम् ॥८९॥
श्यामावदातं रक्ताक्षं पाशहस्तं भयावहम् ।
स्थितं सत्यवतः पार्श्वे निरीक्षन्तं तमेव च ॥९०॥

तं दृष्ट्वा सहसोत्थाय भर्त्तुर्न्यस्य शनैः शिरः ।
कृताञ्जलिरुवाचार्त्ता हृदयेन प्रवेपती ॥९१॥

सावित्र्युवाच—

"दैवतं त्वाभिजानामि वपुरेतद्ध्यमानुषम् ।
कामये ब्रूहि देवेश ! कस्त्वं, किञ्च चिकीर्षसि" ॥९२॥

यम उवाच—

"पतिव्रतासि सावित्रि ! तथैव च तपोऽन्विता ।
अतस्त्वामभिभाषामि, विद्धि मां त्वं शुभे ! यमम् ॥९३॥

अयं ते सत्यवान् भर्त्ता क्षीणायुः पार्थिवात्मजः।
नेष्यामि तमहं बद्ध्वा विद्ध्येतन्मे चिकीर्षितम्" ॥९४॥

सावित्र्युवाच-

"श्रूयते भगवन्! दूतास्तवागच्छन्ति मानुषान्।
नेतुं किल भवान् कस्मादागतोऽसि स्वयं प्रभो!" ॥९५॥
इत्युक्तः पितृराजस्तां भगवान् स्वचिकीर्षितम्।
यथावत् सर्वमाख्यातुं तत्प्रियार्थं प्रचक्रमे ॥९६॥
"अयं च धर्मसंयुक्तो रूपवान् गुणसागरः।
नार्हो मत्पुरुषैर्नेतुमतोऽस्मि स्वयमागतः" ॥९७॥
ततः सत्यवतः कायात् पाशबद्धं वशंगतम्।
अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ॥९८॥
ततः समुद्धृतप्राणं गतश्वासं हतप्रभम्।
निर्विचेष्टं शरीरं तद् बभूवाप्रियदर्शनम् ॥९९॥
यमस्तु तं ततो बद्ध्वा प्रयातो दक्षिणामुखः।
सावित्री चैव दुःखार्त्ता यममेवान्वगच्छत ॥१००॥

यम उवाच—

"निवर्त्त, गच्छ सावित्रि! यावद्गम्यं गतं त्वया।
कृतं भर्त्तुस्त्वयानृण्यं कुरुष्वास्यौर्ध्वदेहिकम्" ॥१०१॥

सावित्र्युवाच—

"यत्र मे नीयते भर्त्ता, स्वयं वा यत्र गच्छति।
मया च तत्र गन्तव्यमेष धर्मः सनातनः ॥१०२॥

तपसा गुरुभक्त्या च भर्त्तुः स्नेहाद् व्रतेन च ।
तव चैव प्रसादेन न मे प्रतिहता गतिः" ॥१०३॥

यम उवाच—

"निवर्त्त, तुष्टोऽस्मि तवानया गिरा
स्वराक्षर-व्यञ्जनहेतुयुक्तया ।
वरं वृणीष्वेह विनास्य जीवितं
ददानि ते सर्वमनिन्दिते ! वरम्" ॥१०४॥

सावित्र्युवाच—

"च्युतः स्वराज्याद् वनवासमाश्रितो
विनष्टचक्षुः श्वशुरो ममाश्रमे ।
स लब्धचक्षुर्बलवान् भवेन् नृप-
स्तव प्रसादाज् ज्वलनार्कसन्निभः" ॥१०५॥

यम उवाच—

"ददानि तेऽहं तमनिन्दिते ! वरं
यथा त्वयोक्तं भविता च तत् तथा ।
तवाध्वना ग्लानिमिवोपलक्षये
निवर्त्त, गच्छस्व न ते श्रमो भवेत्" ॥१०६॥

सावित्र्युवाच—

"श्रमः कुतो भर्त्तृसमीपतो हि मे ?
यतः पतिं नेष्यसि तत्र मे गतिः ।
यतो हि भर्त्ता मम सा मतिर्ध्रुवा
सुरेश ! भूयश्च वचो निबोध मे ॥१०७॥

सतां सकृत्सङ्गतमीप्सितं परं
ततः परं मित्रमिति प्रचक्षते ।
न चाफलं सत्पुरुषेण सङ्गतं
ततः सतां संनिवसेत् समागमे" ॥१०८॥

यम उवाच—

"मनोऽनुकूलं बुधबुद्धिवर्द्धनं
त्वया यदुक्तं वचनं हिताश्रयम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं द्वितीयं वरयस्व भामिनि !" ॥१०९॥

सावित्र्युवाच—

"हृतं पुरा मे श्वशुरस्य धीमतः
स्वमेव राज्यं लभतां स पार्थिवः ।
जह्यात् स्वधर्मान् न च मे गुरुर्यथा
द्वितीयमेतद् वरयामि ते वरम्" ॥११०॥

यम उवाच—

"स्वमेव राज्यं प्रतिपत्स्यतेऽचिरान्
न च स्वधर्मात् परिहास्यते नृपः ।
कृतेन कामेन मया नृपात्मजे !
निवर्त्त, गच्छस्व न ते श्रमो भवेत्" ॥१११॥

सावित्र्युवाच—

"अद्रोहः सर्वभूतेषु कर्मणा, मनसा, गिरा ।
अनुग्रहश्च दानं च सतां धर्मः सनातनः ॥११२॥

एवंप्रायश्च लोकोऽयं मनुष्याः शक्तिपेशलाः ।
सन्तस्त्वेवाप्यमित्रेषु दयां प्राप्तेषु कुर्व्वते" ॥११३॥

यम उवाच—

"पिपासितस्येव भवेद् यथा पय-
स्तथा त्वया वाक्यमिदं समीरितम् ।
विना पुनः सत्यवतोऽस्य जीवितं
वरं वृणीष्वेह शुभे ! यदिच्छसि" ॥११४॥

सावित्र्युवाच—

"ममानपत्यः पृथिवीपतिः पिता
भवेत् पितुः पुत्त्रशतं तथौरसम् ।
कुलस्य सन्तानकरं च यद् भवेत्
तृतीयमेतद् वरयामि ते वरम्" ॥११५॥

यम उवाच—

"कुलस्य सन्तानकरं सुवर्च्चसं
शतं सुतानां पितुरस्तु ते शुभे !
कृतेन कामेन नराधिपात्मजे !
निवर्त्त, दूरं हि पथस्त्वमागता" ॥११६॥

सावित्र्युवाच—

"विवस्वतस्त्वं तनयः प्रतापवां-
स्ततो हि वैवस्वत उच्यसे बुधैः ।
समेन धर्म्मेण चरन्ति ताः प्रजा-
स्ततस्तवेहेश्वर ! धर्म्मराजता ॥११७॥

आत्मन्यपि न विश्वासस्तथा भवति सत्सु यः।
तस्मात् सत्सु विशेषेण सर्व्वः प्रणयमिच्छति" ॥११८॥

यम उवाच—

"उदाहृतं ते वचनं यदङ्गने!
शुभे! न तादृक् त्वदृते श्रुतं मया।
अनेन तुष्टोऽस्मि, विनास्य जीवितं
वरं चतुर्थं वरयस्व गच्छ च" ॥११९॥

सावित्र्युवाच—

"ममात्मजं सत्यवतस्तथौरसं
भवेदुभाभ्यामिह यत् कुलोद्भवम्।
शतं सुतानां बलवीर्य्यशालिना-
मिदं चतुर्थं वरयामि ते वरम्" ॥१२०॥

यम उवाच—

"शतं सुतानां बल-वीर्य्यशालिनां
भविष्यति प्रीतिकरं तवाबले!
परिश्रमस्ते न भवेन् नृपात्मजे!
निवर्त्त, दूरं हि पथस्त्वमागता" ॥१२१॥

सावित्र्युवाच—

"न च प्रसादः सत्पुरुषेषु मोघो
न चाप्यर्थो नश्यति नापि मानः।
यस्मादेतन्नियतं सत्सु नित्यं
तस्मात् सन्तो रक्षितारो भवन्ति" ॥१२२॥

यम उवाच—

"यथा यथा भाषसि धर्मसंहितं
मनोऽनुकूलं सुपदं महार्थवत् ।
तथा तथा मे त्वयि भक्तिरुत्तमा
वरं वृणीष्वाप्रतिमं पतिव्रते !" ॥१२३॥

सावित्र्युवाच—

"न कामये भर्त्तृविनाकृता सुखं
न कामये भर्त्तृविनाकृता दिवम् ।
न कामये भर्त्तृविनाकृता श्रियं
न भर्त्तृहीना व्यवसामि जीवितुम् ॥१२४॥
वरातिसर्गः शतपुत्रता मम
त्वयैव दत्तो ह्रियते च मे पतिः ।
वरं वृणे, 'जीवतु सत्यवानयं'
तवैव सत्यं वचनं भविष्यति" ॥१२५॥

"तथे"त्युक्त्वा तु तं पाशं मुक्त्वा वैवस्वतो यमः ।
धर्मराजः प्रहृष्टात्मा सावित्रीमिदमब्रवीत् ॥१२६॥
"एष भद्रे ! मया मुक्तो भर्त्ता ते कुलनन्दिनि !
अरोगस्तव नेयश्च सिद्धार्थः स भविष्यति ॥१२७॥
चतुर्वर्षशतायुश्च त्वया सार्द्धमवाप्स्यति ।
इष्ट्वा यज्ञैश्च धर्मेण ख्यातिं लोके गमिष्यति" ॥१२८॥

एवं तस्य वरं दत्त्वा धर्मराजः प्रतापवान् ।
निवर्त्तयित्वा सावित्रीं स्वमेव भवनं ययौ ॥१२९॥

सावित्र्यपि यमे याते भर्त्तारं प्रतिलभ्य च ।
जगाम तत्र यत्रास्य भर्त्तुः शावं कलेवरम् ॥१३०॥
सा भूमौ प्रेक्ष्य भर्त्तारमुपसृत्योपगृह्य च ।
उत्सङ्गे शिर आरोप्य भूमावुपविवेश ह ॥१३१॥
संज्ञां च स पुनर्लब्ध्वा सावित्रीमभ्यभाषत ।
प्रोष्यागत इव प्रेम्णा पुनः पुनरुदीक्ष्य वै ॥१३२॥

सत्यवानुवाच—

"सुचिरं बत सुप्तोऽस्मि किमर्थं नावबोधितः ?
क्व चासौ पुरुषः श्यामो योऽसौ मां सञ्चकर्ष ह ? ॥१३३॥
शिरोऽभिताप-सन्तप्तः स्थातुं चिरमशक्नुवन् ।
तवोत्सङ्गे प्रसुप्तोऽस्मि इति सर्वं स्मरे शुभे !" ॥१३४॥
तमुवाचाथ सावित्री, "रजनी व्यवगाहते ।
श्वस्ते सर्वं यथावृत्तमाख्यास्यामि नृपात्मज ! ॥१३५॥
उत्तिष्ठोत्तिष्ठ, भद्रं ते, पितरौ पश्य सुव्रत !
विगाढा रजनी चेयं निवृत्तश्च दिवाकरः ॥१३६॥
यदि नोत्सहसे गन्तुं सरुजं त्वां हि लक्षये ।
न च ज्ञास्यसि पन्थानं तमसा संवृते वने ॥१३७॥
श्वः प्रभाते वने दृश्ये यास्यावोऽनुमते तव ।
वसावेह क्षपामेकां रुचितं यदि तेऽनघ ।" ॥१३८॥

सत्यवानुवाच—

"शिरोरुजा निवृत्ता मे, स्वस्थान्यङ्गानि लक्षये ।
मातापितृभ्यामिच्छामि संयोगं त्वत्प्रसादजम् ॥१३९॥

का त्ववस्था तयोरद्य मदर्थमिति चिन्तये ।
तयोरदृश्ये मयि च महद् दुःखं भविष्यति ॥१४०॥
माता वृद्धा पिता वृद्धस्तयोर्यष्टिरहं किल ।
तौ रात्रौ मामपश्यन्तौ कामवस्थां गमिष्यतः ?" ॥१४१॥
एवमुक्त्वा स धर्मात्मा गुरुभक्तो गुरुप्रियः ।
उच्छ्रित्य बाहू दुःखार्त्तः सस्वरं प्ररुरोद ह ॥१४२॥
ततोऽब्रवीत् तथा दृष्ट्वा भर्त्तारं शोककर्षितम् ।
प्रमृज्याश्रूणि पाणिभ्यां सावित्री धर्मचारिणी ॥१४३॥
"यदि मेऽस्ति तपस्तप्तं यदि दत्तं हुतं यदि ।
श्वश्रू-श्वशुर-भर्तॄणां मम पुण्यास्तु शर्वरी" ॥१४४॥
सावित्री तत उत्थाय केशान् संयम्य भाविनी ।
पतिमुत्थापयामास बाहुभ्यां परिगृह्य वै ॥१४५॥
उत्थाय सत्यवांश्चापि प्रमृज्याङ्गानि पाणिना ।
सर्वा दिशः समालोक्य कठिने दृष्टिमादधे ॥१४६॥
तमुवाचाथ सावित्री, "श्वः फलानि हरिष्यसि ।
योगक्षेमार्थमेतं ते नेष्यामि परशुं त्वहम्" ॥१४७॥
कृत्वा कठिनभारं सा वृक्षशाखावलम्बिनम् ।
गृहीत्वा परशुं भर्त्तुः सकाशे पुनरागमत् ॥१४८॥
वामे स्कन्धे तु वामोरुर्भर्त्तुर्बाहुं निवेश्य च ।
दक्षिणेन परिष्वज्य जगाम गजगामिनी ॥१४९॥
एतस्मिन्नेव काले तु द्युमत्सेनो महाबलः ।
लब्धचक्षुः प्रसन्नायां दृष्ट्यां सर्वं ददर्श ह ॥१५०॥

स सर्व्वानाश्रमान् गत्वा शैव्यया सह भार्य्यया ।
पुत्रहेतोः परामार्त्तिं जगाम भरतर्षभ ! ॥१५१॥
ततोऽभिहृत्य तैर्व्विप्रैः सर्व्वैराश्रमवासिभिः ।
परिवार्य्य समाश्वास्य तावानीतौ स्वमाश्रमम् ॥१५२॥
ब्राह्मणः सत्यवाक् तेषामुवाचेदं तयोर्वचः ।
"यथास्य भार्य्या साविद्री तपसा च दमेन च ।
आचारेण च संयुक्ता तथा जीवति सत्यवान्" ॥१५३॥
एवमाश्वासितस्तैस्तु सत्यवाग्भिस्तपस्विभिः ।
तांस्तान् विगणयन् सर्वांस्ततः स्थिर इवाभवत् ॥१५४॥
ततो मुहूर्त्तात् साविद्री भर्त्रा सत्यवता सह ।
आजगामाश्रमं रात्रौ प्रहृष्टा प्रविवेश ह ॥१५५॥
ततो राज्ञा सहासीनाः सर्वे ते वनवासिनः ।
जात-कौतूहलाः पार्थ ! पप्रच्छुर्नृपतेः सुतम् ॥१५६॥
प्रागेव नागतं कस्मात् सभार्य्येण त्वया विभो !
विरात्रे चागतं कस्मात्? कोऽनुबन्धस्तवाभवत्?" ॥१५७॥

सत्यवानुवाच—

"सुप्तश्चाहं वेदनया चिरमित्युपलक्षये ।
अतो विरात्रागमनं नान्यदस्तीह कारणम्" ॥१५८॥

गौतम उवाच—

"अकस्माच्चक्षुषः प्राप्तिर्द्युमत्सेनस्य ते पितुः ।
नास्य त्वं कारणं वेत्सि, साविद्री वक्तुमर्हति" ॥१५९॥

सावित्र्युवाच—

"मृत्युर्मे पत्युराख्यातो नारदेन महात्मना ।
स चाद्य दिवसः प्राप्तस्ततो नैनं जहाम्यहम् ॥१६०॥
सुप्तश्चैनं यमः साक्षादुपागच्छत् सकिङ्करः ।
स एनमनयद् बद्ध्वा दिशं पितृनिषेविताम् ॥१६१॥
अस्तौषं तमहं देवं सत्येन वचसा विभुम् ।
पञ्च वै तेन मे दत्ता वराः शृणुत तान् मम ॥१६२॥
चक्षुषी च स्वराज्यञ्च द्वौ वरौ श्वशुरस्य मे ।
लब्धं पितुः पुत्रशतं, पुत्राणां चात्मनः शतम् ॥१६३॥
चतुर्वर्षशतायुर्मे भर्त्ता लब्धश्च सत्यवान् ।
भर्त्तुर्हि जीवितार्थं तु मया चीर्णं त्विदं व्रतम्" ॥१६४॥

ऋषय ऊचुः—

"निमज्जमानं व्यसनैरभिद्रुतं
कुलं नरेन्द्रस्य तमोमये ह्रदे ।
त्वया सुशील-व्रतपुण्ययुक्तया
समुद्धृतं साध्वि ! पुनः कुलीनया" ॥१६५॥

एवमात्मा पिता माता श्वश्रूः श्वशुर एव च ।
भर्त्तुः कुलञ्च सावित्र्या सर्वं कृच्छ्रात् समुद्धृतम् ॥१६६॥

---

## विराटसभायां समवेतानां कृष्णादीनां युद्धविषये मन्त्रणा[1]

वैशम्पायन उवाच—

"कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाभिमन्योर्मुदिताः सपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥१॥

सभा तु सा मत्स्यपतेः समृद्धा
मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुगन्धा
तामभ्ययुस्ते नरराजवर्याः ॥२॥

अथासनान्याविशतां पुरस्ता-
दुभौ विराटद्रुपदौ नरेन्द्रौ ।
वृद्धौ च मान्यौ पृथिवीपतीनां
पित्रा समं रामजनार्दनौ च ॥३॥

पाञ्चालराजस्य समीपतस्तु
शिनिप्रवीरः सहरौहिणेयः ।
मत्स्यस्य राज्ञस्तु सुसन्निकृष्टौ
जनार्दनश्चैव युधिष्ठिरश्च ॥४॥

---

[1] उद्योगपर्वणि—प्रथमतोऽध्यायचतुष्टयम् ।

सुताश्च सर्वे द्रुपदस्य राज्ञो
भीमार्जुनौ माद्रवतीसुतौ च ।
प्रद्युम्नसाम्बौ च युधि प्रवीरौ
विराटपुत्रश्च महाभिमन्युः ॥५॥

सर्वे च शूराः पितृभिः समाना
वीर्येण रूपेण बलेन चैव ।
उपाविशन् द्रौपदेयाः कुमाराः
सुवर्णचित्रेषु वरासनेषु ॥६॥

तथोपविष्टेषु महारथेषु
विराजमानाभरणाम्बरेषु ।
रराज सा राजवती समृद्धा
ग्रहैरिव द्यौर्विमलैरुपेता ॥७॥

ततः कथास्ते समवाययुक्ताः
कृत्वा विचित्राः पुरुषप्रवीराः ।
तस्थुर्मुहूर्तं परिचिन्तयन्तः
कृष्णं नृपास्ते समुदीक्षमाणाः ॥८॥

कथान्तमासाद्य च माधवेन
संघट्टिताः पाण्डवकार्यहेतोः ।
ते राजसिंहाः सहिता ह्यशृण्वन्
वाक्यं महार्थं सुमहोदयं च ॥९॥

श्रीकृष्ण उवाच—

'सर्वैर्भवद्भिर्विदितं यथायं
  युधिष्ठिरः सौबलेनाक्षवत्याम् ।
जितो निकृत्यापहृतं च राज्यं
  वनप्रवासे समयः कृतश्च ॥१०॥

शक्तैर्विजेतुं तरसा महीं च
  सत्ये स्थितैः सत्यरथैर्यथावत् ।
पाण्डोः सुतैस्तद्व्रतमुग्ररूपं
  वर्षाणि षट् सप्त च चीर्णमग्र्यैः ॥११॥

त्रयोदशश्चैव सुदुस्तरोऽय-
  मज्ञायमानैर्भवतां समीपे ।
क्लेशानसह्यान् विविधान् सहद्भि-
  र्महात्मभिश्चापि वने निविष्टम् ।
एतैः परप्रेष्यनियोगयुक्तै-
  रिच्छद्भिरात्तं स्वकुलेन राज्यम् ॥१२॥

एवं गते धर्मसुतस्य राज्ञो
  दुर्योधनस्यापि च यद्धितं स्यात् ।
तच्चिन्तयध्वं कुरुपाण्डवानां
  धर्म्यं च युक्तं च यशस्करं च ॥१३॥

अधर्मयुक्तं न च कामयेत
राज्यं सुराणामपि धर्मराजः।
धर्मार्थयुक्तं तु महीपतित्वं
ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ॥१४॥

पित्र्यं हि राज्यं विदितं नृपाणां
यथापकृष्टं धृतराष्ट्रपुत्रैः।
मिथ्योपचारेण यथा ह्यनेन
कृच्छ्रं महत्प्राप्तमसह्यरूपम् ॥१५॥

न चापि पार्थो विजितो रणे तैः
स्वतेजसा धृतराष्ट्रस्य पुत्रैः।
तथापि राजा सहितः सुहृद्भि-
रभीप्सतेऽनामयमेव तेषाम् ॥१६॥

यत्तु स्वयं पाण्डुसुतैर्विजित्य
समाहृतं भूमिपतीन् प्रपीड्य।
तत्प्रार्थयन्ते पुरुषप्रवीराः
कुन्तीसुता माद्रवतीसुतौ च ॥१७॥

बलाभियुक्तैर्विविधैरुपायैः
संप्रार्थिता ह्यसुममित्रसङ्घैः।
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः
सर्वं च तद्वो विदितं यथावत् ॥१८॥

तेषां च लोभं प्रसमीक्ष्य वृद्धं
धर्मज्ञतां चापि युधिष्ठिरस्य ।
संबन्धितां चापि समीक्ष्य तेषां
मतिं कुरुध्वं सहिताः पृथक् च ॥१८॥

इमे च सत्येऽभिरताः सदैव
तं पालयित्वा समयं यथावत् ।
अतोऽन्यथा तैरुपचर्यमाणा
हन्युः समेतान् धृतराष्ट्रपुत्रान् ॥२०॥

तैर्विप्रकारं च निशम्य कार्ये
सुहृज्जनास्तान् परिवारयेयुः ।
युद्धेन बाधेयुरिमांस्तथैवं
तैर्बाध्यमाना युधि तांश्च हन्युः ॥२१॥

तथापि नेमेऽल्पतया समर्था-
स्तेषां जयायेति भवेन्मतिर्वः
समेत्य सर्वे सहिताः सुहृद्भि-
स्तेषां विनाशाय यतेयुरेव ॥२२॥

दुर्योधनस्यापि मतं यथाव-
न्न ज्ञायते किं नु करिष्यतीति ।
अज्ञायमाने च मते परस्य
मन्तव्य पारं कथमभ्युपेमः ॥२३॥

तस्मादितो गच्छतु धर्मशील:
शुचि: कुलीन: पुरुषोऽप्रमत्त: ।
दूत: समर्थ: प्रशमाय तेषां
राज्यार्धदानाय युधिष्ठिरस्य' ॥२४॥

निशम्य वाक्यं तु जनार्दनस्य
धर्मार्थयुक्तं मधुरं समं च ।
समाददे वाक्यमथाग्रजोऽस्य
संपूज्य वाक्यं तदतीव राजन् ॥२५॥

बलदेव उवाच—

'श्रुतं भवद्भिर्गदपूर्वजस्य
वाक्यं यथा धर्मवदर्थवच्च ।
अजातशत्रोश्च हितं च युक्तं
दुर्योधनस्यापि तथैव राज्ञ: ॥२६॥

अर्धं हि राज्यस्य विसृज्य वीरा:
कुन्तीसुतास्तस्य कृते यतन्ते ।
प्रदाय चार्धं धृतराष्ट्रपुत्र:
सुखी सहास्माभिरतीव मोदेत् ॥२७॥

लब्ध्वा हि राज्यं पुरुषप्रवीरा:
सम्यक्प्रवृत्तेषु परेषु चैव ।
ध्रुवं प्रशान्ता: सुखमाविशेयु-
स्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥२८॥

दुर्योधनस्यापि मतं च वेत्तुं
वक्तुं च वाक्यानि युधिष्ठिरस्य ।
प्रियं च मे स्याद् यदि तत्र कश्चि-
द्वजेच्छमार्थं कुरुपाण्डवानाम् ॥२८॥

स भीष्ममामन्त्र्य कुरुप्रवीरं
वैचित्रवीर्यं च महानुभावम् ।
द्रोणं सपुत्रं विदुरं कृपं च
गान्धारराजं चससूतपुत्रम् ॥

सर्वे च येऽन्ये धृतराष्ट्रपुत्रा
बलप्रधाना निगमप्रधानाः ।
स्थिताश्च धर्मेषु यथा स्वकेषु
लोकप्रवीराः श्रुतशीलवृद्धाः ॥

एतेषु सर्वेषु समागतेषु
पौरेषु वृद्धेषु च संगतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं
कुन्तीसुतस्यार्थकरं यथा स्यात् ॥३०-३२॥

सर्वास्ववस्थासु च ते न कोप्या
ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य
द्यूते प्रसक्तस्य हृतं च राज्यम् ॥३३॥

निवार्यमाणश्च कुरुप्रवीरः
सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः ।
स दीव्यमानः प्रतिदीव्य चैनं
गान्धारराजस्य सुतं मताक्षम् ॥

हित्वा हि कर्णं च सुयोधनं च
समाह्वयद्देवितुमाजमीढः ।
दुरोदरास्तत्र सहस्रशोऽन्ये
युधिष्ठिरो यान् विषहेत जेतुम् ॥

उत्सृज्य तान् सौबलमेव चायं
समाह्वयत्तेन जितोऽक्षवत्याम् ।
स दीव्यमानः प्रतिदेवनेन
अक्षेषु नित्यं स्वपराङ्मुखेषु ॥

संरम्भमाणो विजितः प्रसह्य
तत्रापराधः शकुनेर्न कश्चित् ।
तस्मात्प्रणम्यैव वचो ब्रवीतु
वैचित्रवीर्यं बहुसामयुक्तम् ॥२४-२७॥

तथा हि शक्यो धृतराष्ट्रपुत्रः
स्वार्थे नियोक्तुं पुरुषेण तेन ।
अयुद्धमाकाङ्क्षत कौरवाणां
साम्नैव दुर्योधनमाह्वयध्वम् ॥२८॥

साम्ना जितोऽर्थोऽर्थकरी भवेत
युद्धेऽनयो भविता नेह सोऽर्थः' " ॥३९॥

वैशम्पायन उवाच—

"एवं ब्रुवत्येव मधुप्रवीरे
शिनिप्रवीरः सहसोत्पपात ।
तच्चापि वाक्यं परिनिन्द्य तस्य
समाददे वाक्यमिदं समन्युः ॥४०॥

सात्यकिरुवाच—

'यादृशः पुरुषस्यात्मा तादृशं संप्रभाषते ।
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे ॥४१॥
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा ।
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान् प्रति ॥४२॥
एकस्मिन्नेव जायेते कुले क्लीबमहाबलौ ।
फलाफलवती शाखे यथैकस्मिन् वनस्पतौ ॥४३॥
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज !
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ! ॥४४॥
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् ।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ? ॥४५॥
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः ।
अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः ? ॥४६॥

यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ।
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ॥४७॥
समाहूय तु राजानं स्वधर्मरतं सदा ।
निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ? ॥४८॥

कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ।
वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ? ॥४९॥
यद्ययं परवित्तानि कामयेत युधिष्ठिरः ।
एवमप्ययमत्यन्तं परानार्हति याचितुम् ॥५०॥

कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ।
निवृत्तवनवासांस्तान् य आहुर्विदिता इति ॥
अनुनीता हि भीष्मेण द्रोणेन विदुरेण च ।
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु ? ॥५१-५२॥

अहं तु तान्कृतैर्बाणैरनुनीय रणे बलात् ।
पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ॥५३॥
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः ।
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति ॥५४॥

न हि ते युयुधानस्य संरब्धस्य युयुत्सतः ।
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ॥५५॥
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि ।
मां चापि विषहेत्कुद्धं कश्च भीमं दुरासदम् ॥५६॥

यमौ च दृढधन्वानौ यमकल्पौ महाद्युती ।
विराट-द्रुपदौ वीरौ यमकालोपमद्युतौ ॥
को जिजीविषुरासीदेद्धृष्टद्युम्नं च पार्षतम् ।
पञ्चैतान् पाण्डवेयांस्तु द्रौपद्याः कीर्त्तिवर्द्धनान् ॥

समप्रमाणान् पाण्डूनां समवीर्यान् मदोत्कटान् ।
सौभद्रं च महेष्वासममरैरपि दुःसहम् ॥
गदप्रद्युम्नसाम्बांश्च कालसूर्य्यानलोपमान् ?
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ॥

कर्णं चैव निहत्याजावभिषेक्ष्याम पाण्डवम् ।
नाधर्मो विद्यते कश्चिच्छत्रून् हत्वाततायिनः ॥५७-६१॥
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ।
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः ॥६२॥

धार्तराष्ट्रो ह्ययुद्धेन न राज्यं दातुमिच्छति ।
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः ।
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले' ॥६३॥

द्रुपद उवाच—

'एवमेतन्महाबाहो भविष्यति न संशयः ।
न हि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥६४॥
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ ॥६५॥

बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
एतद्धि पुरुषेणाग्रे कार्य्यं सुनयमिच्छता ॥६६॥
न तु वाच्यो मृदुवचो धार्त्तराष्ट्रः कथंचन ।
न हि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥६७॥

गर्दभे मार्दवं कुर्य्याद्गोषु तीक्ष्णं समाचरेत् ।
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ॥
मृदुं वै मन्यते पापो भाषमाणमशक्तिकम् ।
हितमर्थं न जानीयादबुद्धिर्मार्दवे सति ॥६८-६९॥

एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ।
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ॥७०॥
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो !
केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥७१॥

स च दुर्योधनो नूनं प्रेषयिष्यति सर्वशः ।
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ॥७२॥
तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने ।
महद्धि कार्य्यं वोढव्यमिति मे वर्त्तते मतिः ॥७३॥

शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः ।
भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥
अमितौजसे तथोग्राय हार्दिक्यायान्धकाय च ।
दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ! ॥७४-७५॥

आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः ।
सेनजित्प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥७६॥
बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च ।
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥७७॥
शकानां पह्लवानां च दरदानां च ये नृपाः ।
सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ॥७८॥
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् ।
दुर्जयो दन्तवक्त्रश्च रुक्मी च जनमेजयः ॥७९॥
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः ।
भूरितेजा देवकश्च एकलव्यः सहात्मजः ॥८०॥
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् ।
काम्भोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥८१॥
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः ।
क्राथपुत्रश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः ॥८२॥
जानकिश्च सुशर्मा च मणिमान् योतिमत्सकः ।
पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् ॥८३॥
तुण्डश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान् ।
अपराजितो निषादश्च श्रेणिमान् वसुमानपि ॥८४॥
बृहद्बलो महौजाश्च बाहुः परपुरंजयः ।
समुद्रसेनो राजा च सह पुत्रेण वीर्यवान् ॥८५॥
उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः ।
श्रुतायुश्च दृढायुश्च शाल्वपुत्रश्च वीर्यवान् ॥८६॥

कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः ।
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥८७॥
अयं च ब्राह्मणो विद्वान्मम राजन् ! पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥
यथा दुर्योधनो वाच्यो, यथा शान्तनवो नृपः ।
धृतराष्ट्रो यथा वाच्यो, द्रोणश्च रथिनां वरः' " ॥८८-८९॥

---

## शरणागत-रक्षणम्

### कपोत-लुब्धकसंवादः[1]

कश्चित् क्षुद्रसमाचारः पृथिव्यां कालसंमितः ।
विचचार महारण्ये घोरः शकुनिलुब्धकः ॥१॥
काकोल इव कृष्णाङ्गो रूक्षाक्षः कालसंमितः ।
दीर्घजङ्घो ह्रस्वपादो महावक्त्रो महाहनुः ॥२॥
न च तस्य सुहृत् कश्चिन्न सम्बन्धी न बान्धवः ।
स हि तैः संपरित्यक्तस्तेन रौद्रेण कर्मणा ॥३॥
ये नृशंसा दुरात्मानः प्राणिप्राणहरा नराः ।
उद्वेजनीया भूतानां व्याला इव भवन्ति ते ॥४॥

---

[1] आपद्धर्म-पर्वणि (शान्तिपर्वणि—१४३-तमेऽध्याये) ।

स वै जालकमादाय द्विजान् हत्वा वने सदा ।
चकार विक्रयं तेषां पतङ्गानां जनाधिप ! ॥५॥
एवं तु वर्तमानस्य तस्य वृत्तिं दुरात्मनः ।
अगमत् सुमहान् कालो न चाधर्ममबुध्यत ॥६॥

ततः कदाचित् तस्याथ वनस्थस्य समन्ततः ।
पातयन्निव वृक्षांस्तान् सुमहान् वातसंभ्रमः ॥७॥
वारिधारासमूहेन संप्रहृष्टः शतक्रतुः ।
क्षणेन पूरयामास सलिलेन वसुन्धराम् ॥८॥
ततो धाराकुले काले संभ्रमन्नष्टचेतनः ।
शीतार्तस्तद्वनं सर्वमाकुलेनान्तरात्मना ।
नैव निम्नं स्थलं वापि सोऽविन्दत विहङ्गहा ।
पूरितो हि जलौघेन तस्य मार्गो वनस्य तु ॥९-१०॥
पक्षिणो वर्षवेगेन हता लीनास्तदाभवन् ।
मृगाः सिंहा वराहाश्च स्थलमाश्रित्य शेरते ॥११॥
महता वातवर्षेण त्रासितास्ते वनौकसः ।
भयार्ताश्च क्षुधार्ताश्च बभ्रमुः सहिता वने ॥१२॥

स तु शीताहतैर्गात्रैर्न जगाम न तस्थिवान् ।
ददर्श पतितां भूमौ कपोतीं शीतविह्वलाम् ॥१३॥
दृष्ट्वार्तोऽपि हि पापात्मा स तां पञ्जरकेऽक्षिपत् ।
स्वयं दुःखाभिभूतोऽपि दुःखमेवाकरोत् परे ।
पापात्मा पापकारित्वात् पापमेव चकार सः ॥१४॥

सोऽपश्यत्तरुषण्डेषु मेघनीलं वनस्पतिम्।
सेव्यमानं विहङ्गौघैश्छायावास-फलार्थिभिः।
धात्रा परोपकाराय स साधुरिव निर्मितः ॥१५॥
अथाभवत् चणेनैव वियद् विमलतारकम्।
महत् सर इवोत्फुल्लं कुमुदच्छुरितोदकम् ॥१६॥
ताराढ्यं कुमुदाकारमाकाशं निर्मलं बहु।
घनैर्मुक्तं नभो दृष्ट्वा लुब्धकः शीतविह्वलः।
दिशो विलोकयामास विगाढां प्रेक्ष्य शर्वरीम् ॥१७॥
"दूरतो मे निवेशश्च देशादस्मात्" स चिन्तयन्।
कृतबुद्धिर्द्रुमे तस्मिन् वस्तुं तां रजनीं ततः।
साञ्जलिः प्रणतिं कृत्वा वाक्यमाह वनस्पतिम्।
"शरणं यामि यान्यस्मिन् दैवतानि वनस्पतौ" ॥१८-१९॥
स शिलायां शिरः कृत्वा पर्णान्यास्तीर्य्य भूतले।
दुःखेन महताविष्टस्ततः सुष्वाप पक्षिहा ॥२०॥
अथ वृक्षस्य शाखायां विहङ्गः ससुहृज्जनः।
दीर्घकालोषितो राजंस्तत्र चित्रतनूरुहः ॥२१॥
तस्य कल्यगता भार्या चरितुं नाभ्यवर्तत।
प्राप्तां च रजनीं दृष्ट्वा स पक्षी पर्यतप्यत ॥२२॥
"वातवर्षं महच्चासीन्न चागच्छति मे प्रिया।
किन्नु तत्कारणं येन साद्यापि न निवर्तते? ॥२३॥
अपि स्वस्ति भवेत् तस्याः प्रियाया मम कानने?
तया विरहितं हीदं शून्यमद्य गृहं मम ॥२४॥

पुत्र-पौत्र-वधू-भृत्यैराकीर्णमपि सर्वतः ।
भार्याहीनं गृहस्थस्य शून्यमेव गृहं भवेत् ॥२५॥
न गृहं गृहमित्याहुर्गृहिणी गृहमुच्यते ।
गृहं तु गृहिणीहीनमरण्यसदृशं मतम् ॥२६॥
यदि सा रक्तनेत्रान्ता चित्राङ्गी मधुरस्वरा ।
अद्य नायाति मे कान्ता न कार्यं जीवितेन मे ॥२७॥
न भुङ्क्ते मय्यभुक्ते या, नास्नाते स्नाति सुव्रता ।
नातिष्ठत्युपतिष्ठेत, न शेतेऽशयिते मयि ॥२८॥
हृष्टे भवति सा हृष्टा, दुःखिते मयि दुःखिता ।
प्रोषिते दीनवदना, क्रुद्धे च प्रियवादिनी ॥२८॥
पतिव्रता पतिगतिः पतिप्रियहिते रता ।
यस्य स्यात् तादृशी भार्या धन्यः स पुरुषो भुवि ॥३०॥
सा हि श्रान्तं क्षुधार्तं च जानीते मां तपस्विनी ।
अनुरक्ता स्थिरा चैव भक्ता स्निग्धा यशस्विनी ॥३१॥
वृक्षमूलेऽपि दयिता यस्य तिष्ठति तद् गृहम् ।
प्रासादोऽपि तया हीनः कान्तार इति निश्चितम् ॥३२॥
धर्मार्थ-कामकालेषु भार्या पुंसः सहायिनी ।
विदेशगमने चास्य सैव विश्वासकारिका ॥३३॥
भार्या हि परमो ह्यर्थः पुरुषस्येह पठ्यते ।
असहायस्य लोकेऽस्मिँल्लोकयात्रा-सहायिनी ॥३४॥
तथा रोगाभिभूतस्य नित्यं कृच्छ्रगतस्य च ।
नास्ति भार्यासमं किञ्चिन्नरस्यार्तस्य भेषजम् ॥३५॥

नास्ति भार्यासमो बन्धुर्नास्ति भार्यासमा गतिः ।
नास्ति भार्यासमो लोके सहायो धर्मसंग्रहे ॥३६॥
यस्य भार्या गृहे नास्ति साध्वी च प्रियवादिनी ।
अरण्यं तेन गन्तव्यं यथारण्यं तथा गृहम्" ॥३७॥

एवं विलपतस्तस्य श्रुत्वा तु करुणं वचः ।
गृहीता शकुनिघ्नेन कपोती वाक्यमब्रवीत् ॥३८॥

कपोत्युवाच-
"अहोऽतीव सुभाग्याहं यस्या मे दयितः पतिः ।
असतो वा सतो वापि गुणानेवं प्रभाषते ॥३९॥
न सा स्त्री ह्यभिमन्तव्या यस्यां भर्त्ता न तुष्यति ।
तुष्टे भर्तरि नारीणां तुष्टाः स्युः सर्वदेवताः ॥४०॥
दावाग्निनेव निर्दग्धा सपुष्पस्तवका लता ।
भस्मीभवति सा नारी यस्या भर्ता न तुष्यति" ॥४१॥

इति सञ्चिन्त्य दुःखार्ता भर्तारं दुःखितं तदा ।
कपोती लुब्धकेनापि गृहीता वाक्यमब्रवीत् ॥४२॥
"हन्त ! वक्ष्यामि ते श्रेयः, श्रुत्वा तु कुरु तत् तथा ।
शरणागतसन्त्राता भव कान्त ! विशेषतः ॥४३॥
एष शाकुनिकः शेते तवावासं समाश्रितः ।
शीतार्तश्च क्षुधार्तश्च पूजामस्मै समाचर ॥४४॥
यो हि कश्चिद् द्विजं हन्याद्, गाञ्च लोकस्य मातरम् ।
शरणागतं च यो हन्यात्, तुल्यं तेषां च पातकम् ॥४५॥

यस्तु धर्मं यथाशक्ति गृहस्थो ह्यनुवर्तते ।
स प्रेत्य लभते लोकानक्षयानिति शुश्रुम ॥४६॥
स त्वं सन्तानवांश्चैव पुत्रवानसि च द्विज !
तत् स्वदेहे दयां त्यक्त्वा धर्मार्थौ परिगृह्य च ।
पूजामस्मै प्रयुङ्क्ष्व त्वं प्रीयेतास्य मनो यथा" ॥४७॥
इति सा शकुनी वाक्यं पञ्जरस्था तपस्विनी ।
अतिदुःखान्विता प्रोक्ता भर्तारं समुदैक्षत ॥४८॥

स पत्न्या वचनं श्रुत्वा धर्म-युक्तिसमन्वितम् ।
हर्षेण महता युक्तो बाष्पव्याकुललोचनः ॥४९॥
तं वै शाकुनिकं दृष्ट्वा विधिदृष्टेन कर्मणा ।
पूजयामास यत्नेन स पक्षी पक्षिजीविनम् ॥५०॥
उवाच, "स्वागतं तेऽद्य, ब्रूहि किं करवाणि ते ।
सन्तापश्च न कर्तव्यः स्वगृहे वर्तते भवान् ॥५१॥
तद् ब्रवीतु भवान् क्षिप्रं किं करोमि, किमिच्छसि ।
प्रणयेन ब्रवीमि त्वां, त्वं हि नः शरणागतः ॥५२॥
अरावप्युचितं कार्यमातिथ्यं गृहमागते ।
छेत्तुमप्यागताच्छायां नोपसंहरते द्रुमः ॥५३॥
शरणागतस्य कर्तव्यमातिथ्यं हि प्रयत्नतः ।
पञ्चयज्ञ-प्रवृत्तेन गृहस्थेन विशेषतः ॥५४॥
पञ्च यज्ञांश्च यो मोहान्न करोति गृहाश्रमे ।
तस्य नायं न च परो लोको भवति धर्मतः ॥५५॥

तद् ब्रूहि मां सुविस्रब्धो यत्त्वं वाचा वदिष्यसि ।
तत् करिष्याम्यहं सर्वं, मा त्वं शोके मनः कृथाः" ॥५६॥
तस्य तद्वचनं श्रुत्वा शकुनेर्लुब्धकोऽब्रवीत् ।
"बाधते खलु मां शीतं, हिमत्राणं विधीयताम्" ॥५७॥
एवमुक्तस्ततः पक्षी पर्णान्यास्तीर्य भूतले ।
यथाशक्ति हि पर्णेन ज्वलनार्थं द्रुतं ययौ ॥५८॥
स गत्वाङ्गारकर्मान्तं गृहीत्वाग्निमथागमत् ।
ततः शुष्केषु पर्णेषु पावकं सोऽप्यदीपयत् ॥५९॥
स सन्दीप्तं महत् कृत्वा तमाह शरणागतम् ।
"प्रतापय सुविस्रब्धः स्वगात्राण्यकुतोभयः" ॥६०॥
स तथोक्तस्तथेत्युक्त्वा लुब्धो गात्राण्यतापयत् ।
अग्निप्रत्यागतप्राणस्ततः प्राह विहङ्गमम् ॥६१॥
"दत्तमाहारमिच्छामि त्वया, क्षुद् बाधते हि माम्" ।
स तद्वचः प्रतिश्रुत्य वाक्यमाह विहङ्गमः ॥६२॥
"न मेऽस्ति विभवो येन नाशयेयं क्षुधां तव ।
उत्पन्नेन हि जीवामो वयं नित्यं वनौकसः ॥६३॥
सञ्चयो नास्ति चास्माकं मुनीनामिव भोजने" ।
इत्युक्त्वा तं तदा तत्र विवर्ण-वदनोऽभवत् ॥६४॥
मुहूर्तल्लब्धसंज्ञस्तु स पक्षी पक्षिघातिनम् ।
उवाच, "तर्पयिष्ये त्वां मुहूर्तं प्रतिपालय" ॥६५॥
इत्युक्त्वा शुष्कपर्णैस्तु समुज्ज्वाल्य हुताशनम् ।
हर्षेण महताविष्टः स पक्षी वाक्यमब्रवीत् ॥६६॥

"ऋषीणां देवतानां च पितॄणाञ्च महात्मनाम्।
श्रुतः पूर्वं मया धर्मो महानतिथिपूजने ॥६७॥
कुरुष्वानुग्रहं सौम्य! सत्यमेतद् ब्रवीमि ते।
दग्धेन मम देहेन साधो! शमय ते क्षुधाम्" ॥६८॥
ततः कृतप्रतिज्ञो वै स पक्षी प्रहसन्निव।
तमग्निं त्रिः परिक्रम्य प्रविवेश महामतिः ॥६९॥

अग्निमध्ये प्रविष्टं तु लुब्धो दृष्ट्वा तु पक्षिणम्।
चिन्तयामास मनसा, "किमिदं वै मया कृतम्? ॥७०॥
अहो मम नृशंसस्य गर्हितस्य स्वकर्मणा।
अधर्मः सुमहान् घोरो भविष्यति न संशयः" ॥७१॥
एवं बहुविधं भूरि विललाप स लुब्धकः।
गर्हयन् स्वानि कर्माणि द्विजं दृष्ट्वा तथागतम् ॥७२॥
"किमीदृशं नृशंसेन मया कृतमबुद्धिना।
भविष्यति हि मे नित्यं पातकं पापजीविनः ॥७३॥
शुभं कर्म परित्यज्य योऽहं शकुनिलुब्धकः।
नृशंसस्य ममाद्यायं प्रत्यादेशो न संशयः।
दत्तं स्वमांसं दहता कपोतेन महात्मना ॥७४॥
सोऽहं त्यक्ष्ये प्रियान् प्राणान् पुत्रान् दारान् विसृज्य च।
उपदिष्टो हि मे धर्मः कपोतेन महात्मना ॥७५॥
अद्यप्रभृति देहं स्वं सर्वभोगैर्विवर्जितम्।
यथा स्वल्पं सरो ग्रीष्मे शोषयिष्याम्यहं तथा ॥७६॥

क्षुत्-पिपासातप-सहः कृशो धमनि-सन्ततः ।
उपवासैर्बहुविधैश्चरिष्ये पारलौकिकम् ॥७७॥
अहो ! देहप्रदानेन दर्शितातिथिपूजना ।
तस्मादहं चरिष्यामि, धर्मो हि परमा गतिः" ॥७८॥

एवमुक्त्वा विनिश्चित्य रौद्रकर्मा स लुब्धकः ।
महाप्रस्थानमाश्रित्य प्रययौ संशितव्रतः ॥७९॥
ततो यष्टिं शलाकां च चारकं पञ्जरं तथा ।
तां च बद्धां कपोतीं स प्रमुच्य विससर्ज ह ॥८०॥

ततो गते शाकुनिके कपोती प्राह दुःखिता ।
संस्मृत्य सा च भर्तारं रुदती शोककर्शिता ॥८१॥
"नाहं ते विप्रियं कान्त ! कदाचिदपि संस्मरे ।
सर्वापि विधवा नारी बहुपुत्रापि शोचते ॥८२॥
नास्ति भर्तृसमो नाथो, नास्ति भर्तृसमं सुखम् ।
विसृज्य धनसर्वस्वं भर्ता वै शरणं स्त्रियाः ॥८३॥
न कार्यमिह मे नाथ ! जीवितेन त्वया विना ।
पतिहीना तु का नारी सती जीवितुमुत्सहेत् ?" ॥८४॥

एवं विलप्य बहुधा करुणं सा सुदुःखिता ।
पतिव्रता सम्प्रदीप्तं प्रविवेश हुताशनम् ॥८५॥
ततः स्वर्गं गतः पक्षी विमानवरमास्थितः ।
कर्मणा पूजितस्तत्र रेमे स सह भार्यया ॥८६॥

# कथासरित्सागरः



## जीमूतवाहन-चरितम्[1]

अस्त्यम्बिकाजनयिता नगेन्द्रो हिमवानिति ।
न केवलं गिरीणां यो गुरुर्गौरीपतेरपि ॥१॥
विद्याधरनिवासे च तस्मिन् विद्याधराधिपः ।
उवास राजा जीमूतकेतुर्नाम महाचले ॥२॥
तस्याभूत् कल्पवृक्षश्च गृहे पितृक्रमागतः ।
नाम्नान्वर्थेन विख्यातो यो मनोरथदायकः ॥३॥
कदाचिच्च स जीमूतकेतू राजाभ्युपेत्य तम् ।
उद्याने देवताकानं कल्पद्रुममयाचत ॥४॥
"सर्व्वदा प्राप्यतेऽस्माभिस्त्वत्तः सर्व्वमभीप्सितम् ।
तदपुत्राय मे देहि देव ! पुत्रं गुणान्वितम्" ॥५॥
ततः कल्पद्रुमोऽवादीद्, "राजन्नुत्पत्स्यते तव ।
जातिस्मरो दानवीरः सर्व्वभूतहितः सुतः" ॥६॥
तच्छ्रुत्वा स प्रहृष्टः सन् कल्पवृक्षं प्रणम्य तम् ।
गत्वा निवेद्य तद्राज्ञा निजां देवीमनन्दयत् ॥७॥

---

[1] कथासरित्सागरे—चतुर्थे लम्बके द्वितीये तरङ्गे ।

अथ तस्याचिरादेव राज्ञः सूनुरजायत ।
जीमूतवाहनं तञ्च नाम्ना स विदधे पिता ॥८॥
ततः सहजया साकं सर्व्वभूतानुकम्पया ।
जगाम स महासत्त्वो वृद्धिं जीमूतवाहनः ॥९॥
क्रमाच्च यौवराज्यस्थः परिचर्य्या-प्रसादितम् ।
लोकानुकम्पी पितरं विजने स व्यजिज्ञपत् ॥१०॥
"जानामि तात ! यद् भावा भवेऽस्मिन् क्षणभङ्गुराः ।
स्थिरं तु महतामेकमाकल्पममलं यशः ॥११॥
परोपकृतिसम्भूतं तदेव यदि, हन्त ! तत् ।
किमन्यत् स्यादुदाराणां धनं प्राणाधिकप्रियम् ॥१२॥
सम्पच्च विद्युदिव सा लोकलोचनखेदकृत् ।
लोला क्वापि लयं याति या परानुपकारिणी ॥१३॥
तदेष कल्पविटपी कामदो योऽस्ति नः स चेत् ।
परार्थे विनियुज्येत, तदाप्तं तत् फलं भवेत् ॥१४॥
तत्तथाहं करोमीह यथैतस्य समृद्धिभिः ।
अदरिद्रा भवत्येषा सर्व्वार्थिजनसंहतिः" ॥१५॥
इति विज्ञाप्य पितरं तदनुज्ञामवाप्य सः ।
जीमूतवाहनो गत्वा तं कल्पद्रुममब्रवीत् ॥१६॥
"देव ! त्वं ह्यस्मदस्माकमभीष्टफलदायकः ।
तदेकमिदमद्य त्वं मम पूरय वाञ्छितम् ॥१७॥
अदरिद्रां कुरुष्वैतां पृथिवीमखिलां सखे ।
स्वस्त्यस्तु ते, प्रदत्तोऽसि लोकाय द्रविणार्थिने" ॥१८॥

इत्युक्तस्तेन धीरेण कल्पवृक्षो ववर्ष सः ।
कनकं भूतले भूरि, ननन्दुश्चाखिलाः प्रजाः ॥१९॥
"दयालुर्बोधिसत्त्वांशः कोऽन्यो जीमूतवाहनात् ।
शक्नुयादर्थिसात्कर्त्तुमपि कल्पद्रुमं कृती ?" ॥२०॥
इति जातानुरागासु ततो दिक्षु विदिक्ष्वपि ।
जीमूतवाहनस्योच्चैः पप्रथे विशदं यशः ॥२१॥
ततः पुत्त्रप्रथाबद्धमूलं राज्यं समत्सराः ।
दृष्ट्वा जीमूतकेतोस्तद्गोत्रजा विकृतिं ययुः ॥२२॥
दानोपयुक्त-सत्कल्पवृक्षमुक्तास्पदं च तत् ।
मेनिरे निष्प्रभावत्वाज्जेतुं सुकरमेव ते ॥२३॥
ततः सम्भूय युद्धाय कृतबुद्धिषु तेषु च ।
पितरं तमुवाचैवं धीरो जीमूतवाहनः ॥२४॥
"यथा शरीरमेवेदं जलबुद्बुदसन्निभम् ।
प्रवातदीपचपलास्तथा कस्य कृते श्रियः ? ॥२५॥
ता अप्यन्योपमर्देन मनस्वी कोऽभिवाञ्छति ?
तस्मात्तात ! मया नैव योद्धव्यं गोत्रजैः सह ॥२६॥
राज्यं त्यक्त्वा तु गन्तव्यमितः क्वापि वनं मया ।
आसतां कृपणा एते, मा भूत् स्वकुलसंक्षयः" ॥२७॥
इत्युक्तवन्तं जीमूतवाहनं स पिता ततः ।
जीमूतकेतुरप्येवं जगाद कृतनिश्चयः ॥२८॥
"मयापि पुत्र ! गन्तव्यं, का हि वृद्धस्य मे स्पृहा ?
राज्ये तृण इव त्यक्ते यूनापि कृपया त्वया" ॥२९॥

एवमुक्तवता साकं सभार्य्येण "तथे"ति सः ।
पित्रा जगाम जीमूतवाहनो मलयाचलम् ॥३०॥
तत्राधिवासे सिद्धानां चन्दनच्छन्ननिर्झरे ।
स तस्थावाश्रमपदे परिचर्य्यापरः पितुः ॥३१॥
अथ सिद्धाधिराजस्य वश्यो विश्वावसोः सुतः ।
मित्रं मित्रावसुर्नाम तस्यात्र समपद्यत ॥३२॥
तत्स्वसारञ्च सोऽपश्यदेकान्ते जातु कन्यकाम् ।
जन्मान्तरप्रियतमां ज्ञानी जीमूतवाहनः ॥३३॥
तत्कालं च तयोस्तुल्यं यूनोरन्योऽन्यदर्शनम् ।
अभून्मनोमृगामन्दवागुराबन्धसन्निभम् ॥३४॥
ततोऽकस्मात् समभ्येत्य त्रिजगत्पूज्यमेकदा ।
जीमूतवाहनं प्रीतः स मित्रावसुरभ्यधात् ॥३५॥
"कन्या मलयवत्याख्या स्वसा मेऽस्ति कनीयसी ।
तामहं ते प्रयच्छामि, ममेच्छां मान्यथा कृथाः" ॥३६॥
तच्छ्रुत्वैव स जीमूतवाहनोऽपि जगाद तम् ।
"युवराज ! ममाभूत् सा भार्य्या पूर्व्वेऽपि जन्मनि ॥३७॥
त्वञ्च तत्रैव मे जातो द्वितीयं हृदयं सुहृत् ।
जातिस्मरोऽस्म्यहं, सर्व्वं पूर्व्वजन्म स्मरामि तत् ॥३८॥
किन्तु पूर्व्वमितो गत्वा मम पित्रोर्निवेदय ।
तयोः प्रमाणीकृतयोः सिध्यत्येतत्तवेप्सितम्" ॥३९॥
इत्थं निशम्य जीमूतवाहनात् प्रीतमानसः ।
गत्वा मित्रावसुः सर्व्वं तत्पितृभ्यां शशंस तत् ॥४०॥

अभिनन्दितवाक्यश्च ताभ्यां हृष्टस्तदैव सः ।
युवराजो विवाहाय सम्भारमकरोत् स्वसुः ॥४१॥
ततो जग्राह विधिवत्तस्या जीमूतवाहनः ।
पाणिं मलयवत्याः स सिद्धराजपुरस्कृतः ॥४२॥
कृतोद्वाहस्ततस्तस्थौ तस्मिन् जीमूतवाहनः ।
मलयाद्रौ महार्हेण विभवेन वधूसखः ॥४३॥
एकदा च श्वशुर्य्येण स मित्रावसुना सह ।
वेलावनानि जलधेरवलोकयितुं ययौ ॥४४॥
तत्रापश्यच्च पुरुषं युवानं खिन्नमागतम् ।
निवर्त्तयन्तं जननीं "हा पुत्रे"ति विराविणीम् ॥४५॥
अपरेण परित्यक्तं भटेनेवानुयायिना ।
पुरुषेण पृथूत्तुङ्गं प्राप्यैकं शिलातलम् ॥४६॥
"कस्त्वं ? किमीहसे ? किञ्च माता त्वां शोचती"ति तम् ।
स पप्रच्छ, ततः सोऽपि तस्मै वृत्तान्तमब्रवीत् ॥४७॥
"पुरा काश्यपभार्य्ये द्वे कद्रूश्च विनता तथा ।
मिथः कथाप्रसङ्गेन विवादं किल चक्रतुः ॥४८॥
आद्या श्यामान् रवेरश्वानवादीदपरा सितान् ।
अन्योऽन्यदासभावञ्च पणमत्र बबन्धतुः ॥४९॥
ततो जयार्थिनी कद्रूः स्वैरं नागैर्निजात्मजैः ।
विषफूत्कार-मलिनानर्कस्याश्वानकारयत् ॥५०॥
तादृशांश्चोपदर्श्यैतान् विनतां छद्मना जिताम् ।
दासीचकार, कष्टा हि स्त्रीणामन्यासहिष्णुता ॥५१॥

तद् बुद्ध्वागत्य विनतातनयो गरुडस्तदा ।
सान्त्वेन मातुर्दासत्वमुक्तिं कद्रूमयाचत ॥५२॥
ततः कद्रूसुता नागा विचिन्त्यैवं तमब्रुवन् ।
'भो वैनतेय ! क्षीराब्धिः प्रारब्धो मथितुं सुरैः ॥५३॥
ततः सुधां समाहृत्य प्रतिवस्तु प्रयच्छ नः ।
मातरं स्वीकुरुष्वाथ भवान् हि बलिनां वरः' ॥५४॥
एतन्नागवचः श्रुत्वा गत्वा च क्षीर-वारिधिम् ।
सुधार्थं दर्शयामास गरुडो गुरु पौरुषम् ॥५५॥
ततः पराक्रमप्रीतो देवस्तत्र स्वयं हरिः ।
'तुष्टोऽस्मि ते, वरं कञ्चिद् वृणीष्वे'त्यादिदेश तम् ॥५६॥
'नागा भवन्तु मे भक्ष्या' इति सोऽपि हरेस्ततः ।
वैनतेयो वरं वव्रे मातुर्दास्येन कोपितः ॥५७॥
'तथे'ति हरिणादिष्टो निजवीर्यार्जितामृतः ।
स चैवमथ शक्रेण गदितो ज्ञातवस्तुना ॥५८॥
'तथा पक्षीन्द्र ! कार्यं ते यथा मूढैर्न भुज्यते ।
नागैः सुधा, यथा चैनां तेभ्यः प्रत्याहराम्यहम्' ॥५९॥
एतच्छ्रुत्वा 'तथे'त्युक्त्वा स वैष्णव-वरोद्धुरः ।
सुधाकलशमादाय तार्क्ष्यो नागानुपाययौ ॥६०॥
दूरप्रभावभीतांश्च मुग्धानाराज्जगाद तान् ।
'इदमानीतममृतं, मुक्ताम्बां मम गृह्यताम् ॥६१॥
भयश्चेत् स्थापयाम्येतदहं वो दर्भसंस्तरे ।
उन्मोच्याम्बाञ्च गच्छामि, स्वीकुरुध्वमितः सुधाम्' ॥६२॥

'तथे'त्युक्ते च तैर्नागैः स पवित्रे कुशास्तरे ।
सुधाकलशमाधत्त, ते चास्य जननीं जहुः ॥६३॥
दास्यमुक्तामथ कृत्वैवं मातरं गरुडे गते ।
यावदाददते नागा निःशङ्कास्तत् किलामृतम् ।
तावन्निपत्य सहसा तान् विमोह्य स्वशक्तितः ।
तं सुधाकलशं शक्रो जहार कुशसंस्तरात् ॥६४-६५॥
विषण्णास्तेऽथ नागास्तं लिलिहुर्दर्भसंस्तरम् ।
कदाचिदमृतश्चोत-लेपोऽप्यस्मिन् भवेदिति ॥६६॥
तेन पाटितजिह्वास्ते वृथा प्रापुर्द्विजिह्वताम् ।
हास्यादृते किमन्यत् स्यादतिलौल्यवतां फलम् ॥६७
"अथालब्धामृतरसान् नागान् वैरी हरेर्वरात् ।
तार्क्ष्यः प्रववृते भोक्तुं तान्निपत्य पुनः पुनः ॥६८॥
तदापाते च पातालं त्रासनिर्जीवराजिलम् ।
प्रभ्रष्टगर्भिणीगर्भमभूत् क्षपितपन्नगम् ॥६९॥
तं दृष्ट्वा चान्वहं तत्र वासुकिर्भुजगेश्वरः ।
कृत्स्नमेकपदे नष्टं नागलोकममन्यत ॥७०॥
ततो दुर्वारवीर्यस्य सद्यस्तस्य विचिन्त्य स
समयं प्रार्थनापूर्वं चकारैवं गरुत्मतः ॥७१॥
'एकमेकं प्रतिदिनं नागं ते प्रेषयाम्यहम् ।
आहारहेतोः पक्षीन्द्र ! पयोधि-पुलिनाचले ॥७२॥
पाताले तु प्रवेष्टव्यं न त्वया मर्दकारिणा ।
नागलोकक्षयात् स्वार्थस्तवैव हि विनश्यति ॥७३॥

इति वासुकिना प्रोक्तस्तथेति गरुडोऽन्वहम् ।
तत्प्रेषितमिहैकैकं नागं भोक्तुं प्रचक्रमे ॥७४॥
तेन क्रमेण चासंख्याः फणिनोऽत्र क्षयं गताः ।
अहञ्च शङ्खचूडाख्यो नागो वारो ममाद्य च ॥७५॥
अतोऽहं गरुडाहारहेतोर्वध्यशिलामिमाम् ।
मातुश्च शोच्यतां प्राप्तो नागराजनिदेशतः" ॥७६॥
इति तस्य वचः श्रुत्वा शङ्खचूडस्य दुःखितः ।
सान्तःखेदः स जीमूतवाहनस्तमभाषत ॥७७॥
"अहो ! किमपि निःसत्त्वं राजत्वं बत वासुकेः ।
यत् स्वहस्तेन नीयन्ते रिपोरामिषतां प्रजाः ॥७८॥
किं न प्रथममात्मैव तेन दत्तो गरुत्मते ?
क्लीबेनाभ्यर्थिता केयं स्वकुलक्षयसाक्षिता ? ॥७९॥
उत्पद्य कश्यपात् पापं तार्क्ष्योऽपि कुरुते कियत् ।
देहमात्रकृते मोहः कीदृशो महतामपि ! ॥८०॥
तदहं तावदद्यैकं रक्षामि त्वां गरुत्मतः ।
स्वशरीरप्रदानेन मा विषादं कृथाः सखे !" ॥८१॥
तच्छ्रुत्वा शङ्खचूडोऽपि धैर्यादेतदुवाच तम् ।
"शान्तमेतन्महासत्त्व ! मास्मैवं भाषथाः पुनः ॥८२॥
न काचस्य कृते जातु युक्ता मुक्तामणेः क्षतिः ।
न चाप्यहं गमिष्यामि कथां कुलकलङ्किताम्" ॥८३॥
इत्युक्त्वा तं निषिध्यैव साधुर्जीमूतवाहनम् ।
मत्वा गरुडवेलाञ्च स क्षणान्तरगामिनीम् ।

शङ्खचूड़ो ययौ तत्र वारिधेस्तीरवर्त्तिनम् ।
अन्तकाले नमस्कर्त्तुं गोकर्णाख्यमुमापतिम् ॥८४-८५॥
गते तस्मिन् स कारुण्यनिधिर्जीमूतवाहनः ।
तत्त्राणायात्मदानेन बुबुधे लब्धमन्तरम् ॥८६।
ततस्तद् विस्मृतमिव क्षिप्रं कृत्वा स्वयुक्तितः ।
कार्य्योपदेशाद् व्यसृजद्विजं मित्रावसुं गृहम् ॥८७॥
तत्क्षणाच्च समासन्न-तार्क्ष्यपक्षानिलाहता ।
ततस्तद्दर्शनाश्चर्य्यादिव सा भूरघूर्णत ॥८८॥
तेनाहि-रिपुमायान्तं मत्वा जीमूतवाहनः ।
परानुकम्पी तां वध्यशिलामध्यारुरोह सः ॥८९॥
क्षणाच्चात्र निपत्यैव महासत्त्वं जहार तम् ।
आहत्य चञ्चा गरुडः स्वच्छायाच्छादिताम्बरः ॥९०॥
परिस्रवदसृग्धारं च्युतोत्खात-शिखामणिम् ।
नीत्वा भक्षयितुं चैनमारेभे शिखरे गिरेः ॥९१॥
तत्कालं पुष्पवृष्टिश्च निपपात नभस्तलात् ।
तद्दर्शनाच्च "किं न्वेतदि"ति तार्क्ष्यो विसिस्मिये ॥९२॥
तावत् स शङ्खचूडोऽत्र नत्वा गोकर्णमागतः ।
ददर्श रुधिरासारसिक्तां वध्यशिलातलम् ॥९३॥
"हा धिङ् मदर्थं तेनात्मा दत्तो नूनं महात्मना ।
तत् कुत्र नीतस्तार्क्ष्येण क्षणेऽस्मिन् स भविष्यति ?
अन्विष्यामि द्रुतं तावत् कदाचित् तमवाप्नुयाम्" ।
इति साधुः स तद्रक्तधारामनुसरन् ययौ ॥९५॥

मध्यान्तरे च हृष्टं तं दृष्ट्वा जीमूतवाहनम् ।
गरुडो भक्षणं मुक्त्वा सविस्मयमचिन्तयत् ॥८६॥
"कश्चित् किमन्य एवायं भक्ष्यमाणोऽपि यो मया ।
विपद्यते न तु परं, धीरः प्रत्युत हृष्यति ?" ॥८७॥
इत्यन्तर्विमृशन्तञ्च तार्क्ष्यं तादृग्विधोऽपि सः ।
निजगाद निजाभीष्टसिद्ध्यै जीमूतवाहनः ॥८८॥
"पक्षिराज ! ममास्त्येव शरीरे मांसशोणितम् ।
तदकस्मादतृप्तोऽपि किं निवृत्तोऽसि भक्षणात् ?" ॥८९॥
तच्छ्रुत्वाश्चर्य्यवशगस्तं स पप्रच्छ पक्षिराट् ।
"नागः साधो! न तावत्त्वं, ब्रूहि तत् को भवानि"ति ॥१
"नाग एवास्मि, भुङ्क्ष्व त्वं यथारब्धं समापय ।
आरब्धा ह्यसमाप्तैव किं धीरैस्त्यज्यते क्रिया ?" ॥१०१॥
इति यावच्च जीमूतवाहनः प्रतिवक्ति तम् ।
तावत् स शङ्खचूडोऽत्र प्राप्तो दूरादभाषत ॥१०२॥
"मा मा गरुत्मन्नैवैष नागो, नागो ह्यहं तव ।
तदेनं मुञ्च, कोऽयं ते जातोऽकाण्डे बत भ्रमः ?" ॥१०३॥
तच्छ्रुत्वातीव विभ्रान्तो बभूव स खगेश्वरः ।
वाञ्छितासिद्धिखेदञ्च भेजे जीमूतवाहनः ॥१०४॥
ततोऽन्योऽन्य-समालाप-ज्ञात-विद्याधराधिपम् ।
बुद्ध्वा तं भक्षितं मोहाद् गरुत्मानन्वतप्यत ॥१०५॥
"अहो बत नृशंसस्य पापमापतितं मम ।
किं वा सुलभपापा हि भवन्त्युन्मार्गवृत्तयः ॥१०६॥

श्लाघ्यस्त्वेव महात्मैकः परार्थ-प्राणदायिना ।
ममेति-मोहैकवशं येन विश्वमधःकृतम्” ॥१०७॥
इति तच्चिन्तयन्तञ्च गरुडं ।
वह्निं विविक्षुं जीमूतवाहनोऽथ जगाद सः ॥१०८॥
“पक्षीन्द्र ! किं विषण्णोऽसि ? सत्यं पापाद् बिभेषि चेत्
तदिदानीं न भूयस्ते भक्ष्या होमी भुजङ्गमाः ॥१०९॥
कार्य्यश्चानुशयस्तेषु पूर्व्वभुक्तेषु भोगिषु ।
एषोऽत्र हि प्रतीकारो वृथान्यच्चिन्तितं तव” ॥११०॥
इत्युक्तस्तेन स प्रीतस्तार्क्ष्यो भूतानुकम्पिना ।
“तथे”ति प्रतिपेदे तद् वाक्यं तस्य गुरोरिव ॥१११॥
ययौ चामृतमानेतुं नाकाज्जीवयितुं जवात् ।
क्षताङ्गं तत्र तस्यान्यानस्थिशेषानहीनपि ॥११२॥
ततश्च साक्षादागत्य देव्या सिक्तोऽमृतेन सः ।
जीमूतवाहनो गौर्य्या तद्भार्य्याभक्तितुष्टया ॥११३॥
तेनाधिकतरोद्भूतकान्तीन्यङ्गानि जज्ञिरे ।
तस्य सानन्दगीर्वाण-दुन्दुभिध्वनिभिः सह ॥११४॥
ततोऽक्षयेण देहेन यशसा च विराजितम् ।
वृद्धाभ्यनन्दत् तं बन्धुजनो जीमूतवाहनम् ॥११५॥
ननन्द तस्य भार्य्या च सज्ञाति-पितरौ तथा ।
को न प्रहृष्येद् दुःखेन सुखत्वपरिवर्त्तिना ? ॥११६॥
स्वस्थोत्थिते ततस्तस्मिन्नानीय गरुडो हि तत् ।
कृत्स्ने वेलातटेऽप्यत्र ववर्षामृतमम्बरात् ॥११७॥

तेन सर्व्वे समुत्तस्थुर्जीवन्तस्तत्र पन्नगाः ।
वेलावनं विनिर्मुक्त-वैनतेयभयं ततः ॥११८॥
विसृष्टस्तेन च ययौ शङ्खचूडो निजालयम् ।
स्वच्छन्दमविसृष्टश्च लोकांस्त्रीनपि तद्यशः ॥११९॥



## विष्णुपुराणम्

---

# इन्द्रं प्रति दुर्वाससः शापः

पराशर उवाच—

दुर्वासाः शङ्करस्यांशश्चचार पृथिवीमिमाम् ।
स ददर्श स्रजं दिव्यामृषिर्विद्याधरीकरे ॥१॥
सन्तानकानामखिलं यस्या गन्धेन वासितम् ।
अतिसेव्यमभूद् ब्रह्मंस्तद्वनं वनचारिणाम् ॥२॥
उन्मत्तव्रतधृग् विप्रस्तां दृष्ट्वा शोभनां स्रजम् ।
तां ययाचे वरारोहां विद्याधरवधूं ततः ॥३॥
याचिता तेन तन्वङ्गी मालां विद्याधराङ्गना ।
ददौ तस्मै विशालाक्षी सादरं प्रणिपत्य च ॥४॥
तामादायात्मनो मूर्ध्नि स्रजमुन्मत्तरूपधृक् ।
कृत्वा स विप्रो मैत्रेय, परिबभ्राम मेदिनीम् ॥५॥

स ददर्श समायान्तमुन्मत्तैरावतस्थितम् ।
त्रैलोक्याधिपतिं देवं सह देवैः शचीपतिम् ॥६॥
तामात्मनः स शिरसः स्रजमुन्मत्तषट्पदाम् ।
आदायामरराजाय चिक्षेपोन्मत्तवन्मुनिः ॥७॥

गृहीत्वामरराजेन स्रगैरावतमूर्धनि ।
न्यस्ता रराज कैलास-शिखरे जाह्नवी यथा ॥८॥
मदान्धकारिताक्षोऽसौ गन्धाकृष्टेन वारणः ।
करेणाघ्राय चिक्षेप तां स्रजं धरणीतले ॥९॥

ततश्चुक्रोध भगवान् दुर्वासा मुनिसत्तमः ।
मैत्रेय, देवराजं तं क्रुद्धश्चैतदुवाच ह ॥१०॥
"ऐश्वर्यमत्त, दुष्टात्मन्नतिस्तब्धोऽसि वासव !
श्रियो धाम स्रजं यस्त्वं मद्दत्तां नाभिनन्दसि ॥११॥
प्रसाद इति नोक्तं ते प्रणिपातपुरःसरम् ।
हर्षोत्फुल्लकपोलेन न चापि शिरसा धृता ॥१२॥
मया दत्तामिमां मालां यस्मान्न बहु मन्यसे ।
त्रैलोक्यश्रीरतो मूढ, विनाशमुपयास्यति ॥१३॥
मां मन्यतेऽन्यैः सदृशं न्यूनं शक्र, भवान् द्विजैः ।
अतोऽवमानमस्माकं मानिना भवता कृतम् ॥१४॥
मद्दत्ता भवता यस्मात् क्षिप्ता माला महीतले ।
तस्मात् प्रनष्टलक्ष्मीकं त्रैलोक्यं ते भविष्यति ॥१५॥
यस्य संजातकोपस्य भयमेति चराचरम् ।
तं त्वं मामतिगर्वेण देवराजावमन्यसे" ॥१६॥

पराशर उवाच—

महेन्द्रो वारणस्कन्धादवतीर्य त्वरान्वितः ।
प्रसादयामास तदा दुर्वाससमकल्मषम् ॥१७॥

प्रसाद्यमानः स तदा प्रणिपातपुरःसरम् ।
प्रत्युवाच सहस्राक्षं दुर्वासा मुनिसत्तमः ॥१८॥
"नाहं कृपालुहृदयो न च मां भजते क्षमा ।
अन्ये ते मुनयः शक्र, दुर्वाससमवेहि माम् ॥१८॥

क्षमाप्रधानैरन्यैस्त्वं गर्वमापादितो मुधा ।
अक्षान्तिसारसर्वस्वं दुर्वाससमवेहि माम् ॥२०॥
वसिष्ठाद्यैर्दयासारैः स्तोत्रं कुर्वद्भिरुच्चकैः ।
गर्वं गतोऽसि येनैवं मामप्यद्यावमन्यसे ॥२१॥
ज्वलज्जटाकलापस्य भ्रुकुटीकुटिलं मुखम् ।
निरीक्ष्य कस्त्रिभुवने मम यो न गतो भयम् ॥२२॥
नाहं क्षमिष्ये बहुना किमुक्तेन शतक्रतो !
विडम्बनामिमां भूयः करोष्यनुनयात्मिकाम्" ॥२३॥

पराशर उवाच—

इत्युक्त्वा प्रययौ विप्रो देवराजोऽपि तं पुनः ।
आरुह्यैरावतं ब्रह्मन्, प्रययावमरावतीम् ॥२४॥
ततः प्रभृति निःश्रीकं सशक्रं भुवनत्रयम् ।
मैत्रेयासीदपध्वस्तं संक्षीणौषधिवीरुधम् ॥२५॥
न यज्ञाः संप्रवर्तन्ते न तपस्यन्ति तापसाः ।
न च दानादिधर्मेषु मनश्चक्रे तदा जनः ॥२६॥

---

# प्रह्लादचरितम्

पराशर उवाच—

मैत्रेय श्रूयतां सम्यक् चरितं तस्य धीमतः ।
प्रह्लादस्य सदोदार-चरितस्य महात्मनः ॥१॥
दितेः पुत्रो महावीर्यो हिरण्यकशिपुः पुरा ।
त्रैलोक्यं वशमानिन्ये ब्रह्मणो वरदर्पितः ॥२॥
इन्द्रत्वमकरोद् दैत्यः स चासीत् सविता स्वयम् ।
वायुरग्निरपां नाथः सोमश्चाभून्महासुरः ॥३॥
धनानामधिपः सोऽभूत् स एवासीत् स्वयं यमः ।
यज्ञभागानशेषांस्तु स स्वयं बुभुजेऽसुरः ॥४॥
देवाः स्वर्गं परित्यज्य तत्त्रासान्मुनिसत्तम ।
विचेरुरवनौ सर्वे बिभ्राणा मानुषीं तनुम् ॥५॥
जित्वा त्रिभुवनं सर्वं त्रैलोक्यैश्वर्यदर्पितः ।
उपगीयमानो गन्धर्वैर्बुभुजे विषयान् प्रियान् ॥६॥
तस्य पुत्रो महाभागः प्रह्लादो नाम नामतः ।
पपाठ बालपाठ्यानि गुरुगेहे गतोऽर्भकः ॥७॥
एकदा तु स धर्मात्मा जगाम गुरुणा सह ।
पानासक्तस्य पुरतः पितुर्दैत्यपतेस्तदा ॥८॥
पादप्रणामावनतं तमुत्थाप्य पिता सुतम् ।
हिरण्यकशिपुः प्राह प्रह्लादममितौजसम् ॥९॥

हिरण्यकशिपुरुवाच—

पश्यतां भवता वत्स सारभूतं सुभाषितम् ।
कालेनैतावता यत् ते सदोद्युक्तेन शिक्षितम् ॥१०॥

प्रह्लाद उवाच—

श्रूयतां तात वक्ष्यामि सारभूतं तवाज्ञया ।
समाहितमना भूत्वा यन्मे चेतस्यवस्थितम् ॥११॥
अनादिमध्यान्तमजमवृद्धिक्षयमच्युतम् ।
प्रणतोऽस्मि महात्मानं सर्वकारणकारणम् ॥१२॥

पर उवाच—

एवं निशम्य दैत्येन्द्रः क्रोधसंरक्तलोचनः ।
विलोक्य तद्गुरुं प्राह स्फुरिताधरपल्लवः ॥१३॥

हिरण्यकशिपुरुवाच—

ब्रह्मबन्धो किमेतत् ते विपक्षस्तुतिसंहितम् ।
असारं ग्राहितो बालो मामवज्ञाय दुर्मते ! ॥१४॥

गुरुरुवाच—

दैत्येश्वर न कोपस्य वशमागन्तुमर्हसि ।
ममोपदेशजनितं नायं वदति ते सुतः ॥१५॥

हिरण्यकशिपुरुवाच—

अनुशिष्टोऽसि केनेदृक् वत्स प्रह्लाद कथ्यताम् ।
ममोपदिष्टं नेत्येष प्रब्रवीति गुरुस्तव ॥१६॥

प्रह्लाद उवाच—

शास्ता विष्णुरशेषस्य जगतो यो हृदि स्थितः।
तमृते परमात्मानं तात कः केन शास्यते? ॥१७॥

हिरण्यकशिपुरुवाच—

कोऽयं विष्णुः सुदुर्बुद्धे यं ब्रवीषि पुनः पुनः।
जगतामीश्वरस्येह पुरतः प्रसभं मम? ॥१८॥

प्रह्लाद उवाच—

न शब्दगोचरे यस्य योगिध्येयं परम् पदम्।
यतो यश्च स्वयं विश्वं स विष्णुः परमेश्वरः ॥१९॥

हिरण्यकशिपुरुवाच—

परमेश्वरसंज्ञोऽज्ञ किमन्यो मय्यवस्थिते।
तवास्ति मर्तुकामस्त्वं प्रब्रवीषि पुनः पुनः? ॥२०॥

प्रह्लाद उवाच—

न केवलं तात मम प्रजानां
स ब्रह्मभूतो भवतश्च विष्णुः।
धाता विधाता परमेश्वरश्च
प्रसीद, कोपं कुरुषे किमर्थम्? ॥२१॥

हिरण्यकशिपुरुवाच—

प्रविष्टः कोऽस्य हृदये दुर्बुद्धेरतिपापकृत्।
येनेदृशान्यसाधूनि वदत्याविष्टमानसः? ॥२२॥

प्रह्लाद उवाच—

(न केवलं मद्‌हृदयं स विष्णु-
राक्रम्य लोकान् सकलानवस्थितः।
स मां त्वदादींश्च पितः समस्तान्
समस्तचेष्टासु युनक्ति सर्व्वगः ॥२३॥)

हिरण्यकशिपुरुवाच—

दुरात्मा वध्यतामेष नानेनार्थोऽस्ति जीवता।
स्वपक्षहानिकर्तृत्वाद् यः कुलाङ्गारतां गतः ॥२४॥

पराशर उवाच—

इत्याज्ञप्तास्ततस्तेन प्रगृहीत-महायुधाः।
उद्यतास्तस्य नाशाय दैत्याः शतसहस्रशः ॥२५॥

प्रह्लाद उवाच—

विष्णुः शस्त्रेषु युष्माकं मयि चासौ तथा स्थितः
दैतेयास्तेन सत्येन न क्राम्यन्त्वायुधानि मे ॥२६॥

पराशर उवाच—

ततस्तैः शतशो दैत्यैः शस्त्रौघैराहतोऽपि सन्।
नावाप वेदनामल्पामभूच्चैव पुनर्नवः ॥२७॥

हिरण्यकशिपुरुवाच—

दुर्बुद्धे विनिवर्त्तस्व वैरिपक्षस्तवादतः।
अभयं ते प्रयच्छामि मातिमूढमतिर्भव ॥२८॥

प्रह्लाद उवाच—

भयं भयानामपहारिणि स्थिते
मनस्यनन्ते मम कुत्र तिष्ठति ?
यस्मिन् स्मृते जन्मजरान्तकादि-
भयानि सर्वाण्यपयान्ति तात ! ॥२८॥

हिरण्यकशिपुरुवाच—

भो भोः सर्पा दुराचारमेनमत्यन्तदुर्मतिम् ।
विषज्वालाकुलैर्वक्त्रैः सद्यो नयत संक्षयम् ॥३०॥

पराशर उवाच—

इत्युक्तास्तेन ते सर्पाः कुहकास्तक्षकान्धकाः ।
अदशन्त समस्तेषु गात्रेष्वतिविषोल्बणाः ॥३१॥
स त्वासक्तमतिः कृष्णे दश्यमानो महोरगैः ।
न विवेदात्मनो गात्रं तत्स्मृत्याह्लादसंस्थितः ॥३२॥

सर्पा ऊचुः—

दंष्ट्रा विशीर्णा मणयः स्फुटन्ति
फणेषु तापो हृदयेषु कम्पः ।
नास्य त्वचः स्वल्पमपीह भिन्नं
प्रशाधि दैत्येश्वर कार्य्यमन्यत् ॥३३॥

हिरण्यकशिपुरुवाच—

हे दिग्गजाः सङ्कटदन्तमिश्रा
घ्नतैनमस्मद्रिपुपक्षभिन्नम् ।

तस्मा विनाशाय भवन्ति तस्य
यथारवेः प्रज्वलिता हुताशाः ॥२४॥

पराशर उवाच—

ततः स दिग्गजैर्बालो भूभृच्छिखरसन्निभैः ।
पातितो धरणीपृष्ठे विषाणैरवपीडितः ॥२५॥
स्मरतस्तस्य गोविन्दमिभदन्ताः सहस्रशः ।
शीर्णा वक्षःस्थलं प्राप्य स प्राह पितरं ततः ॥२६॥
(दन्ता गजानां कुलिशाग्रनिष्ठुराः
शीर्णा यदेते न बलं ममैतत् ।
महाविपत्पापविनाशनोऽयं
जनार्दनानुस्मरणानुभावः ॥२७॥)

हिरण्यकशिपुरुवाच—

ज्वाल्यतामसुरा वह्निरपसर्पत दिग्गजाः ।
वायो समेधयाग्निं त्वं दह्यतामेष पापकृत ॥२८॥

पराशर उवाच—

महाकाष्ठचयच्छन्नमसुरेन्द्रसुतं ततः ।
प्रज्वाल्य दानवा वह्निं ददहुः स्वामिनोदिताः ॥२९॥

प्रह्लाद उवाच—

तातैष वह्निः पवनेरितोऽपि
न मां दहत्यत्र समन्ततोऽहम् ।
पश्यामि पद्मास्तरणास्तृतानि
शीतानि सर्वाणि दिशां मुखानि ॥४०॥

पुरोहिता ऊचुः—

राजन् नियम्यतां कोपो बालेऽत्र तनये निजे ।
कोपो देवनिकायेषु तत्र ते सफलो यतः ॥४१॥
तथा तथैनं बालं ते शासितारो वयं नृप ।
यथा विपक्षनाशाय विनीतस्ते भविष्यति ॥४२॥
बालत्वं सर्वदोषाणां दैत्यराजास्पदं यतः ।
ततोऽत्र कोपमत्यर्थं योक्तुमर्हसि नार्भके ॥४३॥
न त्यक्ष्यति हरेः पक्षमस्माकं वचनाद् यदि ।
ततः कृत्यां वधायास्य करिष्यामोऽनिवर्तिनीम् ॥४४॥

पराशर उवाच—

एवमभ्यर्थितस्तैस्तु दैत्यराजः पुरोहितैः ।
दैत्यैर्निष्कासयामास पुत्रं पावकसञ्चयात् ॥४५॥
ततो गुरुगृहे बालः स वसन् बालदानवान् ।
अध्यापयामास मुहुरुपदेशान्तरे गुरोः ॥४६॥

प्रह्लाद उवाच—

श्रूयतां परमार्थो मे दैतेया दितिजात्मजाः ।
न चान्यथैतन्मन्तव्यं नात्र लोभादिकारणम् ॥४७॥
यावतः कुरुते जन्तुः सम्बन्धान् मनसः प्रियान् ।
तावन्तोऽस्य निखन्यन्ते हृदये शोकशङ्कवः ॥४८॥

असारसंसार-विवर्तनेषु
यात तोषं प्रसभं ब्रवीमि ।

सर्वत्र दैत्याः समतामुपेत
समत्वमाराधनमच्युतस्य ॥४९॥
तस्मिन् प्रसन्ने किमिहास्त्यलभ्यं
धर्मार्थकामैरलमल्पकास्ते ।
समाश्रिताद् ब्रह्मतरोरनन्ता-
न्निःसंशयं प्राप्स्यथ वै महत् फलम् ॥५०॥

पराशर उवाच—

तस्यैवं दानवाश्चेष्टां दृष्ट्वा दैत्यपतेर्भयात् ।
आचचख्युः स चोवाच सूदानाहूय सत्वरः ॥५१॥

हिरण्यकशिपुरुवाच—

हे सूदा मम पुत्रोऽसावन्येषामपि दुर्मतिः ।
कुमार्गदेशको दुष्टो हन्यताममविलम्बितम् ॥५२॥
हलाहलविषं तस्य सर्वभक्ष्येषु दीयताम् ।
अविज्ञातमसौ पापो हन्यतां मा विचार्यताम् ॥५३॥

पराशर उवाच—

ते तथैव ततश्चक्रुः प्रह्लादाय महात्मने ।
विषदानं यथाज्ञप्तं पित्रा तस्य महात्मनः ॥५४॥
हालाहलं विषं घोरमनन्तोच्चारणेन सः ।
अभिमन्त्र्य सहान्नेन मैत्रेय बुभुजे तदा ॥५५॥
अविकारं स तद् भुक्त्वा प्रह्लादः स्वस्थमानसः ।
अनन्तख्यातिनिर्वीर्यं जरयामास तद्विषम् ॥५६॥

ततस्तदा भयत्रस्ता जीर्णं दृष्ट्वा महद्विषम् ।
दैत्येश्वरमुपागम्य प्रणिपत्येदमब्रुवन् ॥५७॥

सूदा ऊचुः—

दैत्यराज विषं दत्तमस्माभिरतिभीषणम् ।
जीर्णं तेन सहान्नेन प्रह्लादेन सुतेन ते ॥५८॥

हिरण्यकशिपुरुवाच—

त्वर्यतां त्वर्यतां हे हे सद्यो दैत्यपुरोहिताः ।
कृत्यां तस्य विनाशाय उत्पादयत मा चिरात् ॥५९॥

पराशर उवाच—

सकाशमागम्य ततः प्रह्लादस्य पुरोहिताः ।
सामपूर्वमथोचुस्ते प्रह्लादं विनयान्वितम् ॥६०॥

पुरोहिता ऊचुः—

जातस्त्रैलोक्यविख्याते आयुष्मन् ब्रह्मणः कुले ।
दैत्यराजस्य तनयो हिरण्यकशिपोर्भवान् ॥६१॥
किं देवैः किमनन्तेन किमन्येन तवाश्रयः ।
पिता ते सर्वलोकानां त्वं तथैव भविष्यसि ॥६२॥
तस्मात् परित्यजैनां त्वं विपक्षस्तवसंहिताम् ।
श्लाघ्यः पिता समस्तानां गुरूणां परमो गुरुः ॥६३॥

प्रह्लाद उवाच—

एवमेतन्महाभागाः श्लाघ्यमेतन्महाकुलम् ।
मरीचेः सकलेऽप्यस्मिन् त्रैलोक्ये कोऽन्यथा वदेत् ? ॥६४॥

पिता च मम सर्वस्मिन् जगत्युत्कृष्टचेष्टितः ।
एतदप्यवगच्छामि सत्यमत्रापि नानृतम् ॥६५॥
गुरूणामपि सर्वेषां पिता परमको गुरुः ।
यदुक्तं भ्रान्तिस्तत्रापि स्वल्पापि हि न विद्यते ॥६६॥
पिता गुरुर्न सन्देहः पूजनीयः प्रयत्नतः ।
तत्रापि नापराध्यामीत्येवं मनसि मे स्थितम् ॥६७॥
यदेतत् किमनन्तेनेत्युक्तं युष्माभिरीदृशम् ।
को ब्रवीति यथायुक्तं किन्तु नैतद् वचोऽर्थवत् ॥६८॥
इत्युक्त्वा सोऽभवन्मौनी तेषां गौरवयन्त्रितः ।
प्रहस्य च पुनः प्राह किमनन्तेन साध्विति ॥६८॥

पुरोहिता ऊचुः—

यदास्मद्वचनान्मोहग्राहं न त्यक्ष्यते भवान् ।
ततः कृत्यां विनाशाय तव स्रक्ष्यामः दुर्मते ! ॥७०॥

प्रह्लाद उवाच—

कः केन हन्यते जन्तुर्जन्तुः कः केन रक्ष्यते ।
हन्ति रक्षति चैवात्मा ह्यसत्-साधु समाचरन् ॥७१॥

पराशर उवाच—

इत्युक्तास्तेन ते क्रुद्धा दैत्यराजपुरोहिताः ।
कृत्यामुत्पादयामासुर्ज्वालामालोज्ज्वलाकृतिम् ॥७२॥
अतिभीमा समागम्य पादन्यासक्षतक्षितिः ।
शूलेन सा सुसंक्रुद्धा तं जघानाशु वक्षसि ॥७३॥

तत् तस्य हृदयं प्राप्य शूलं बालस्य दीप्तिमत् ।
जगाम खण्डितं भूमौ तत्रापि शतधा गतम् ॥७४॥
यत्रानपायी भगवान् हृद्यास्ते हरिरीश्वरः ।
भङ्गो भवति वज्रस्य तत्र शूलस्य का कथा ! ॥७५॥
अपापे तत्र पापैश्च पातिता तत्र याजकैः ।
तानेव सा जघानाशु कृत्या नाशं जगाम च ॥७६॥
कृत्यया दह्यमानांस्तान् विलोक्य स महामतिः
त्राहि कृष्णेत्यनन्तेति वदन्नभ्यवपद्यत ॥७७॥

प्रह्लाद उवाच—

सर्वव्यापिन् जगद्रूप जगत्स्रष्टर्जनार्दन !
पाहि विप्रानिमानस्माद् दुःसहान्मन्त्रपावकात् ॥७८॥
यथा सर्वेषु भूतेषु सर्वव्यापी जगद्गुरुः ।
विष्णुरेव तथा सर्वे जीवन्त्वेते पुरोहिताः ॥७९॥

पराशर उवाच—

इत्युक्तास्तेन ते सर्वे संस्पृष्टाश्च निरामयाः ।
समुत्तस्थुर्द्विजा भूयस्तमूचुः प्रश्रयान्वितम् ॥८०॥

पुरोहिता ऊचुः—

दीर्घायुरप्रतिहतबल-वीर्यसमन्वितः ।
पुत्रपौत्रधनैश्वर्ययुक्तो वत्स भवोत्तम ! ॥८१॥

पराशर उवाच—

इत्युक्त्वा तं ततो गत्वा यथावृत्तं पुरोहिताः ।
दैत्यराजाय सकलमाचचक्षुर्महामुने ! ॥८२॥